– श्री सच्चिदानन्दायनमः –

# अद्वैतानन्द

या

# सच्चिदानन्द प्रकाश

( दसवाँ भाग )

जिसमें

पूज्यपाद श्री सतगुरु दयाल श्रीश्री १०८ श्री स्वामी

## अद्वैतानन्द जी महाराज परमहंस

के

## परमोपयोगी उपदेश

प्राप्ति स्थान :

**श्री सच्चिदानन्द सत्संग प्रकाश,**

श्री अद्वैत आश्रम, कृष्णानगर, मथुरा.

भल्लग्रामएवच॥ नंदिग्रामस्त्वयोध्यायांत्रयो ग्रामाश्चमुक्तिदाः॥ दण्डकंसैंधवारण्यंजम्बूः मार्गश्चपुष्करं॥ उत्पलावर्तमारण्यंनैमिषंकुरुजांगलम्॥ हिमवानर्बुदश्चैवनवारण्याश्चमुक्तिदाः॥ रेणुकाशूकरःकाशीकालीकालवटेश्वरः॥ कालंजरोमहाकालऊखरानवमुक्तिदाः॥ कोकाकुंजार्बुदश्चैवमणिकर्णीवटस्तथा॥ शालग्रामःशूकरश्चमथुराचहरेःप्रिया॥ गयानिष्क्रमणश्चैवयश्चलोहार्गलस्तथा॥ स्वयंप्रभामालवश्चबदरीचहरेर्गृहम्॥ गुह्यान्येतानिदिव्यानिमुक्तिद्वारंचतुर्दश॥ एतेषांदर्शनेनैवयत्फलंजायतेनृणाम्॥ तत्फलंसमवाप्नोति अयोध्यादर्शनेकृते॥ अथायोध्याप्रमाणम्॥ वाल्मीकीये॥ आयतादशचद्वेचयोजनानिमहापुरी॥ श्रीमतीत्रीणिविस्तीर्णासुविभक्तमहापथा॥ ॥ अथान्तर्गृहम्॥ रुद्रयामले॥ सहस्रधारामारभ्ययोजनंपूर्वतोदिशि॥ पश्चिमेचतथादेवियोजनंसमतोवधिः॥ दक्षिणोत्तरभागेतुशरयूतमसावधिः॥ एतत्क्षेत्रस्यसंस्थानंहरेरन्तर्गृहं स्मृतम्॥ मत्स्याकृतिरियंभद्रे पुरीविष्णो[illegible]री इत्यादि॥ अथायोध्यागमनफलम्॥ यावस रामस्यमार्गेगच्छतिमानवः॥ पदेपदेऽश्वमे

धस्य यज्ञस्य लभते फलम् ॥ यात्रा निर्गच्छमान स्तु यः प्रेरयति चापरान् ॥ स तु पापान्निवृत्तो वै लभते वाञ्छितं फलम् ॥ अथ शरयूदर्शन फलम् ॥ पुष्करे तु नरो गत्वा कार्त्तिक्यां कृत्तिकायुते ॥ तत्फलं समवाप्नोति शरयूदर्शने कृते ॥ कोटि कल्पसहस्राणि ह्यवन्ती वासजं फलम् ॥ तत्फलं समवाप्नोति शरयूदर्शने कृते ॥ मन्वन्तर सहस्रैस्तु काशीवासेन यत्फलम् ॥ तत्फलं समवाप्नोति शरयूदर्शने कृते ॥ प्रयागे तु नरो गत्वा माघं द्वादशकं वसेत् ॥ तत्फलं समवाप्नोति शरयूदर्शने कृते ॥ गयाश्राद्धं च यः कुर्य्यात् पुरुषोत्तमदर्शनम् ॥ तत्फलं नाधिकं प्रोक्तं कलौ शरयूदर्शनात् ॥ मथुरायां कल्पमेकं वसते मानवो यदि ॥ तत्फलं समवाप्नोति शरयूदर्शने कृते ॥ अथ शरयूस्नान फलम् ॥ या गतिर्योगयुक्तानां वाराणस्यां तनुत्यजाम् ॥ सा गतिः स्नानमात्रेण शरय्वां हरिवासरे ॥ तत्राभिषेकं यः कुर्यात् सितृदेवार्चने रतः ॥ अश्वमेधाद्दशगुणं प्रवदंति मनीषिणः ॥ जन्मप्रभृति यत्पापं स्त्रियो वा पुरुषस्य वा ॥ अयोध्यास्नानमात्रेण सर्वमेव प्रणश्यति ॥ तत्रत्य स्वर्गद्वार प्रमाणम् ॥ तत्र स्नानादि फलं च ॥ सहस्रधारामारम्य पूर्वतः शरयूजले ॥ षट्त्रिं

शरदधिकं प्रोक्तं धनुषां षट् शतानि च ॥ स्वर्गद्वा
रस्य विस्तारं पुराणज्ञैश्च कीर्तितमिति रुद्रयाम
ले ॥ दिव्यान्यपि च भौमानि तीर्थानि सकलान्यपि
॥ प्रातरागत्य तिष्ठंति तत्र संस्पृस्य पार्वति ॥ त
स्मादत्र प्रकर्त्तव्यं प्रातस्स्नानं विशेषतः ॥ सर्व
तीर्थावगाहस्य फलप्राप्तिमभीप्सता ॥ त्यजं
ति प्राणिनः प्राणान् स्वर्गद्वारे च ये नराः ॥ प्रयां
ति परमं स्थानं विष्णोस्ते नात्र संशयः ॥ स्वर्ग
द्वारे नरः स्नात्वा दृष्ट्वा नागेश्वरं शिवम् ॥ पूज
यित्वा विधानेन सर्वान् कामानवाप्नुयात् ॥
अथायोध्यायां सप्तहरयः ॥ अयोध्यायां स
प्तहरयो वर्त्तंते पुण्यराशयः ॥ गुप्तहरिश्च चक्रह
रिस्तथा विष्णुहरिः प्रिये ॥ धर्महरिर्बिल्वहरि
स्तथा पुण्यहरिः शुभः ॥ तस्माच्चंद्रहरेः पूर्वा क
र्त्तव्या च विचक्षणैः ॥ यात्रेति शेषः ॥ अथ जन्म
स्थानमाहात्म्यम् ॥ जन्मस्थानं हि रामस्य मो
क्षादि फलदायकं ॥ यं दृष्ट्वा तु मनुष्यस्य गर्भवा
सक्षयो भवेत् ॥ विना दानेन तपसा विना तीर्थै
र्विना मखैः ॥ नवमी दिवसे प्राप्ते व्रतधारी तु मान
वः ॥ दर्शनात्तस्य यो देवि मुच्यते जन्मसंकटात्
॥ अथ गोप्रतारमाहात्म्यम् ॥ तदग्रे गोप्रतारं
तु तीर्थं सर्वोत्तमोत्तमम् ॥ गोप्रतार समं तीर्थं

नभूतोनभविष्यति॥वाराणस्यांयथादेविव
र्त्ततेमणिकर्णिका॥अयोध्यायांतथादेविगो
प्रताराभिधंमहत्॥कार्त्तिकींप्राप्यगर्जेतितो
र्थानिसकलान्यपि॥गोप्रतारंगमिष्यामःपापं
नश्यतितत्क्षणात्॥गोप्रतारेनरोदेवियःस्ना
तिसुविनिश्चितः॥सयातिपरमंस्थानंयोगि
नामपिदुर्ल्लभमितिपाद्मे॥महाभारते॥गोप्र
तारंततोगच्छेत्सरय्वास्तीर्थमुत्तमम्॥यत्र
रामोगतःस्वर्गंसभृत्यबलवाहनः॥देहंत्यक्त्वा
महाराजतस्यतीर्थस्यतेजसा॥रामस्यचप्र
भावेणव्यवसायाच्चभारत॥तस्मिन्तीर्थेनरः
स्नात्वागोप्रतारेनराधिप॥सर्वपापविशुद्धात्मा
स्वर्गलोकेमहीयते॥ ॥इतिश्रीमन्महारा
जाधिराजमहाराजश्रीरामवंशजश्रीमन्महा
राजमाधवसिंहकारितेतीर्थसुधानिधौअयो
ध्यातरङ्गः॥ ॥अथमथुरामाहात्म्यम्॥त
त्रादौतत्प्रतिपादकगोपालतापनीयश्रुतिः॥तथा
हि॥यथाहिवैसरसीपद्मंतिष्ठतितथाभूम्यातिष्ठती
तिचक्रेणरक्षिताहिवैमधुरातस्माद्गोपालपु
रीहिभवतीति॥बृहद्बृहद्‌वनंमध्येमधुवनं
तालस्तालवनंकाम्यःकाम्यवनं॥बहुलोबहु
लवनंकुमुदंकुमुदवनंखदिरः॥खदिरवनंभ

द्रो भद्रवनं भांडीर इति भांडीरवनं श्रीवनं लोहव
नं वृंदया वृंदावनं॥ एतैरावृत्ता पुरी भवति॥ त
त्र तेष्वेव गहनेष्वेव देवा मनुष्या नागा गंधर्वाः
किंनरा गायंति नृत्यंतीति॥ तत्र द्वादशादि
त्या एकादश रुद्रा अष्टौ वसवः॥ सप्त मुनयो
ब्रह्मा नारदश्च पंच विनायकाः वीरेश्वरो रुद्रे
श्वरो विघ्नेश्वरो गणेश्वरो नीलकंठो विश्वभ
द्रेश्वर॥ आद्यानि लिंगानि चतुर्विंशतिर्भवंति॥
द्वे वने स्तः कृष्णवनं भद्रवनं तयोरंतर्द्वादश वना
नि पुण्यानि पुण्यतमानि॥ तेष्वेव देवास्तिष्ठंति
सिद्धाः सिद्धिं प्राप्ताः॥ तत्र हि रामस्य राममू
र्त्तिः॥ प्रद्युम्नस्य प्रद्युम्नमूर्त्तिः॥ अनिरुद्धस्या
निरुद्धमूर्त्तिः कृष्णस्य कृष्णमूर्त्तिः॥ तेष्वेवं म
थुरास्त्वेवं द्वादश मूर्त्तयो भवंति॥ एकां हि रुद्रा
यजंति द्वितीयां ब्रह्मा यजति तृतीयां ब्रह्मजा
यजंति च चतुर्थीं मरुतो यजंति॥ पंचमीं विना
यका यजंति षष्ठीं वसवो यजंति सप्तमीमृषयो
यजंति॥ अष्टमीं गंधर्वा यजंति॥ नवमीमप्सर
सो यजंति दशमी हि दिवोत्यंतर्द्धाने तिष्ठति॥
एकादश्यंतरिक्षपदं गता द्वादशी तु भूम्यां ति
ष्ठति॥ तां हि ये यजंति ते मृत्युं तरंति मुक्तिं लभ
न्ते॥ गर्भजन्मजरामरणतापत्रयात्मकं दुःखं

तरंति॥ इत्येवंश्रुत्यातत्रापिमृतस्यमुक्तिरिति॥ ए
कदेशानुप्रत्यासप्तपुरीष्वपिमुक्तिरितिच॥ अथ
मथुराप्रमाणम्॥ आदिवाराहे॥ विंशतिर्योजना
नांतुमाथुरंमंडलंमम॥ पदेपदेऽश्वमेधस्यफलं
भवतिनान्यथा॥ अथमथुरानामोच्चारणफल
म्॥ चतुर्णामपिवेदानांपुण्यमध्ययनाच्चयत्॥
तत्पुण्यंजायतेपुंसांमथुरांवदतांसतां॥ सर्व
तीर्थापेक्षयामथुरायाआधिक्यं॥ आदिवारा
हेनविद्यतेचपातालेनान्तरिक्षेनमानुषे॥ स
मन्तुमथुरायाहिप्रियम्ममवसुन्धरे॥ तथा
स्कन्दपुराणेमाथुरखण्डेनारदवाक्यम्॥ शृ
णुधर्म्ममहाप्राज्ञयत्त्वंपृच्छसिधर्म्मवित्॥ गो
प्यंसप्तपुरीणांतुमथुरामण्डलंस्मृतम्॥ अथ
स्मरणम्॥ त्रिंशद्वर्षसहस्राणित्रिंशद्वर्षशतानि
च॥ यत्फलम्भारतेवर्षेतत्फलंमथुरांस्मरन्॥
तथा आदिवाराहे॥ महामाघींप्रयागेतुयत्फ
लंलभतेनरः॥ तत्फलंलभतेदेविमथुरायांदि
नेदिने॥ अथजितेन्द्रियत्वेफलम्॥ कुरुक्षेत्रेषु
यत्पुण्यंराहुग्रस्तेदिवाकरे॥ तत्फलंलभतेदे
विमथुरायांजितेन्द्रियः॥ पूर्णैर्वर्षसहस्रैस्तुवा
राणस्यांतुयत्फलम्॥ तत्फलंलभतेदेविमथु
रायांक्षणेनहि पाद्मे पातालखण्डे॥ पूर्णैर्वर्ष

सहस्रैस्तु तीर्थराजेन यत्फलम्॥ तत्फलं लभते देवि मथुरायां दिने दिने॥ अथ तत्रत्य विश्रान्ति तीर्थस्नानफलम्॥ विश्रान्तिसंज्ञकं नाम तीर्थं त्रैलोक्य विश्रुतम्॥ यस्मिन्स्नातो नरो देवि मम लोके महीयते॥ सर्वतीर्थेषु यत्स्नानं सर्वतीर्थेषु यत्फलम्॥ तत्फलं लभते देवि दृष्ट्वा देवं गतश्रमम्॥ न च यज्ञैर्न तपसा न स्नानैर्न च संयमैः॥ तत्फलं लभते देवि स्नात्वा विश्रान्तिसंज्ञके॥ कालत्रयन्तु वसुधे यः पश्यति गतश्रमम्॥ कृत्वा प्रदक्षिणम्भीरुः विष्णुलोकं स गच्छति॥ अथ कनखलम्॥ अस्ति चान्यतरं गुह्यं सर्वसंसारमोक्षणम्॥ तस्मिन्स्नातो नरो देवि मम लोके महीयते॥ तथा कनखलं तीर्थं गुह्यं तीर्थं परं मम॥ स्नानमात्रेण तत्रापि नाकपृष्ठे समोदते॥ अथ तिन्दुकस्नानफलं पाद्मे॥ अस्ति क्षेत्रं परं गुह्यं तिन्दुकं नाम नामतः॥ तस्मिन्क्षेत्रे नरः स्नात्वा मम लोके महीयते॥ सूर्य्यतीर्थमाहात्म्यम्॥ ततः सूर्य्यस्य तीर्थं तु सर्वपापप्रमोचनम्॥ तत्राथ मुंचते प्राणान्मम लोके महीयते॥ आदित्येह्नि संक्रान्तौ ग्रहणे चन्द्रसूर्य्ययोः॥ तस्मिन्स्नातो नरो देवि राजसूय फलं लभेत्॥ अथ ध्रुवतीर्थे फलम्॥ ध्रुवतीर्थे तु वसुधे यः श्राद्धं कुरुते नरः॥

पितॄन्संतारयेतसर्वान्पितृपक्षेविशेषतः॥ दक्षिणेध्रुवतीर्थस्यमोक्षतीर्थंवसुन्धरे॥ स्नानमात्रेणवसुधेमोक्षंप्राप्नोतिमानवः॥ अथ कोटितीर्थम्॥ तत्रैवकोटितीर्थन्तुदेवानामपिदुर्लभम्॥ तत्रस्नानेनदानेनममलोकेमहीयते॥ अथऋणतीर्थफलम्॥ दक्षिणेऋणतीर्थस्यमोक्षतीर्थंवसुन्धरे॥ स्नानमात्रेणवसुधेमोक्षंप्राप्नोतिमानवः॥ कोटितीर्थेनरस्नात्वा ब्रह्मलोकेमहीयते॥ तत्रैववृद्धितीर्थन्तुपितॄणामपिदुर्लभम्॥ पिण्डंदत्वातुवसुधेपितृलोकंसगच्छति॥ गयापिण्डप्रदानेनयत्फलंलभतेनरः॥ तत्फलंलभतेदेविज्येष्ठेवृद्ध्यान्नसंशयः॥ द्वादशैतानितीर्थानिदेवानांदुर्लभानिच॥ स्नानंदानंजपोहोमःसहस्रगुणितोभवेत्॥ एषांस्मरणमात्रेणसर्वपापैःप्रमुच्यते॥ श्रुत्वा तीर्थस्यमाहात्म्यंसर्वकामानवाप्नुयात्॥ अथकार्त्तिकेविशेषः॥ कार्त्तिकेबोधिनींप्राप्यततःश्रेयोःपरन्नहि॥ राज्यमन्यत्रसंत्सज्यस्फीतन्निहितकंटकम्॥ कार्त्तिकेमथुरायाञ्चकौमुद्यांजागरञ्चरेत्॥ अथद्वादश्यांविशेषो विष्णुपुराणे॥ ऊर्ज्जस्यशुक्लद्वादश्यांस्नात्वावैयमुनाजले॥ मथुरायांहरिंदृष्ट्वाप्राप्नोतिपरमांगतिम्॥

अथभीष्मपञ्चकम्॥पाद्मे॥भीष्मंप्रतिकृष्णवाक्यम्॥त्वयाकृतेव्रतेपश्चात्ख्यास्यतेभीष्मपञ्चकम्॥येत्वत्रकर्मभूमौहिकरिष्यन्तिव्रतम्मम॥मथुरायान्तुगोविन्देतेषांभक्तिःकरेस्थिता॥तथाभविष्ये॥सर्वाभीष्टप्रदंप्रोक्तंमाथुरेभीष्मपञ्चकम्॥भीष्मपंचदिनेप्राप्तेमथुरा मण्डलेहरेः॥निद्राच्छेदकरेपुण्येपादुकेचावलोकयेत्॥अथमधुवनान्तर्गतमथुरामाहात्म्यम्॥स्कान्दे॥माथुरखण्डे॥मधोर्वनंप्रमथतोयत्रवैमथुरापुरी॥मधुर्दैत्योहतोयत्रहरिणाविश्वरूपिणा॥तत्रैवभगवद्व्यासआविर्भावोहरेर्नृप॥विश्रामश्चहरेस्तत्रदेवानाञ्चनृपोत्तम॥योवैमधुवनेस्नातियमुनाजलमाश्रितः॥सर्वतीर्थेषुसंस्नातस्तत्फलंलभतेध्रुवम्॥अथश्रीकालिंदीमाहात्म्यम्॥आदिवाराहे॥गंगाशतगुणाप्रोक्तामाथुरेममण्डले॥यमुनाविश्रुतादेविनात्रकार्य्याविचारणा॥तत्रतीर्थानिगुह्यानिभविष्यन्तिममानघे॥येषुस्नातोनरोदेविममलोकेमहीयते॥यमुनासलिलेस्नातःसुचिर्भूत्वाजितेन्द्रियः॥समभ्यर्च्याच्युतंसम्यक्प्राप्नोतिपरमांगतिम्॥अथकालविशेषस्नानादिफलम्॥आदिवाराहे॥ज्येष्ठस्यशुक्लद्वा-

दश्यांसमभ्यर्च्च्यजनार्दनम्॥ धन्योसौपिण्ड
निर्वापं यमुना यां प्रदास्यति॥ विष्णुपुराणे॥ य
मुनासलिलेस्नातःपुरुषोमुनिसंयमः॥ ज्येष्ठा
मूलेमलेपक्षेद्वादश्यामुपवासकृत॥ समभ्य
र्च्याच्युतंसम्यक्मथुरायांसमाहितः॥ अश्व
मेधस्ययज्ञस्यप्राप्नोत्यविकलंफलम्॥ अथम
थुराब्राह्मणमाहात्म्यम्॥ आदिवाराहे॥ अनृ
चोमाथुरोयस्यचतुर्वेदस्तथापरः॥ चतुर्वेदं प
रित्यज्यमाथुरंभोजयेद्बुधः॥ कृषीबलोदुराचा
रोधर्म्ममार्गपराङ्मुखः॥ ईदृशःपूजनीयोहिमा
थुरोममरूपधृक्॥ माथुराणांचयद्रूपंतन्मेरूपं
वसुंधरे॥ एकस्मिन्भोजितेविप्रेकोटिर्भवतिभो
जिता॥ माथुराममपूज्याहिमाथुराममवल्लभाः
॥ माथुरेपरितुष्टेवैतुष्टोहंनात्रसंशयः॥ भवन्ति
सर्वतीर्थानिपुण्यान्यायतनानिच॥ मंगलानि
चसर्वाणियत्रतिष्ठन्तिमाथुराः॥ अथमथुरा
वासिमाहात्म्यम्॥ आदिवाराहे॥ येवसन्तिम
हाभागमथुरामितरेजनाः॥ तेपियान्तिपरांसि
द्धिंमत्प्रसादान्नसंशयः॥ यस्तत्रनिवसेद्देविसं
यतात्माजितेन्द्रियः॥ त्रिकालमपिभुञ्जानोवा
युभक्षसमोहिसः॥ मथुरायांमहापुर्य्यांयेवस
न्तिसुचिव्रताः॥ बलिभिक्षाप्रदातारोदेवास्तेन

रविग्रहाः॥मथुरावासिनोलोकाःसर्वेतेमुक्तिभाजनाः॥अपिकीटःपतङ्गोवातिर्य्यग्योनिंगतोःपिवा॥तिष्ठेद्युगसहस्रन्तुपादेनैकेनयःपुमान्॥तस्याधिकम्भवेत्पुण्यंमथुरायांनिवासिनः॥परदाररतायेचयेनराश्चाजितेन्द्रियाः॥मथुरावासिनःसर्वेतेदेवानरविग्रहाः॥अथकालीयहृदमाहात्म्यम्॥कालीयस्यहृदंगत्वाक्रीडांकृत्वावसुन्धरे॥स्नानमात्रेणतत्रैवसर्वपापैःप्रमुच्यते॥अथात्रमुंचतेप्राणान्ममलोकंसगच्छति॥योऽस्मिन्स्नात्वामदाक्रीडेदेवादींस्तर्पयेज्जलैः॥उपोष्यमांस्मरन्चार्चेतसर्वपापैःप्रमुच्यते॥वाराहे॥कालीयस्यहृदंपुण्यंअस्तिगुह्यंपरंमम॥यत्राहंक्रीडतेनित्यंविमलेयमुनाम्भसि॥तत्राभिषेकंकुर्वीतअहोरात्रोषितोनरः॥सतक्षकगृहंगत्वानागकन्यासुमोदते॥अथात्रमुंचतेप्राणान्विमलेयमुनाम्भसि॥तत्राभिषेकंकुर्वीतअहोरात्रोषितोनरः॥तक्षकस्यगृहंहित्वाममलोकेमहीयते॥अथकदम्बमहिमा॥तत्रापिमहदाश्चर्य्यंपश्यंतिसुबुधानराः॥कालीयह्रदपूर्वेणकदम्बोमहतोद्रुमः॥शतशाखोविशालाक्षिपुण्यंसुरभिगन्धिच॥सचद्वादशमासानिमनोज्ञःसुभ

शीतलः॥ पुष्पायति विशालाक्षि प्रवासन्तो दि
शोदश॥ अथ गोवर्द्धनमाहात्म्यम्॥ आदिवारा
हे॥ अस्ति गोवर्द्धनोनाम क्षेत्रं परमदुर्लभम्॥
मथुरा पश्चिमे भागे अदूराद्योजनद्वये अन्नकू
टं ततः प्राप्य तस्य कुर्यात्प्रदक्षिणम्॥ न तस्य पु
नरावृत्तिर्देवि सत्यं ब्रवीमि ते॥ अथ सर्वतीर्था
नि॥ तथाहि॥ आदिवाराहे॥ असिकुण्डञ्चवै वै
कुण्ठं कोटितीर्थोत्तरन्तथा॥ अभिमुक्तं सोम
तीर्थं संयमन्तिन्दुकं तथा॥ चक्रतीर्थं तथाक्रू
रं द्वादशादित्यसंज्ञकम्॥ पुण्याः पवित्राश्च म
हा महापातकनाशनाः॥ कुरुक्षेत्राच्छतगु
णं मथुरायां न संशयः॥ अथ मथुरामाहात्म्य
श्रवणमहिमा॥ ये पठन्ति महाभागाः शृण्वंति
च समाहिताः॥ मथुरायाश्च माहात्म्यं ते या
न्ति परमां गतिम्॥ कुलानि तेतारयन्ति द्वे श
ते पक्षयोर्द्वयोः॥ माहात्म्यश्रवणाद्देव नात्र का
र्य्या विचारणा॥ माथुरे महातीर्थानि॥ रसिकुं
ठं च वैकुण्ठः श्रीकुण्ठो ध्रुव एव च॥ कृष्णगंगा
चक्रतीर्थं सरस्वत्याश्च संगमः॥ चतुःसामु
द्रिकः कूपो गोकर्णाख्यः शिवस्तथा॥ गोवर्द्ध
नानन्दवनं वत्सक्रीडनकं तथा॥ वनानि द्वा
दश तथा महातीर्थानि माथुरे॥ अथ मथुराव

रदेवता॥नारायणान्यपर्य्यायः केशवोमध्य संस्थितः॥स्वयंभूःपद्मनाभश्चदीर्घविष्णुर्गत श्रमः॥गोविन्दोहरिवाराहावितिमाथुरदेवताः ॥इतिमाहात्म्यप्रतिपादकवाक्यैःपूर्वोक्तश्रु त्याचसाक्षात्परम्परयावामुक्तिर्मृतानामिति सिध्यतिपरम्परयातत्वन्तुकाशीतरङ्गे निरूप यिष्यामः॥❀॥इतिश्रीमन्महाराजाधिराज श्रीरामवंशजश्रीमाधवसिंहकारितेतीर्थसुधा निधौमथुरातरङ्गः॥❀॥अथहरिद्वारमाहा त्म्यम्॥तत्रादौनामकथनम्॥काशीखण्डे॥य त्रसावैष्णवीमायामायापाशैर्नपाशयेत्॥केचि दूचुर्हरिद्वारंमोक्षद्वारमतःपरे॥गङ्गाद्वारन्त्वके प्याहुःकेचिन्मायापुरींपुनः॥यतोभिनिर्गतागं गाख्याताभागीरथीभुवि॥यन्नामोच्चारणात्पुं सांपापंयातिसहस्रधा॥वैकुण्ठस्यैकसोपानं हरिद्वारंजगुर्जनाः॥अथस्नानफलम्॥यत्रा प्लुतानरायान्तितद्विष्णोःपरमंपदम्॥तत्र स्नकोटितीर्थेअभिषेकफलम्॥महाभारतेपु लस्त्यतीर्थयात्रायाम्॥तत्राभिषेकंकुर्वीत कोटितीर्थेसमन्वितः॥पुण्डरीकमवाप्नोति कुलञ्चैवसमुद्धरेत्॥प्रोष्यैकांरजनींतत्रगो सहस्रफलंलभेत्॥सप्तगङ्गेत्रिगङ्गेशक्रावर्त्ते

तीर्थानांफलं ॥ सप्तगङ्गेत्रिगङ्गेचशक्रावर्त्ते चतर्पयन्॥ देवान्पितृंश्चविधिवत्पुण्यलोकेमहीयते॥ तत्रकनखलेस्नानम्॥ ततःकनखलेस्नात्वात्रिरात्रोपोषितोनरः॥ अश्वमेधमवाप्नोतिस्वर्गलोकञ्चगच्छति॥ अथमायाक्षेत्रप्रमाणम्॥ स्कान्दे॥ गंगाद्वाराच्छृणुप्राज्ञरत्नस्तम्भावधिंध्रुवे॥ तथानन्दागिरेःपश्चात्काष्ठान्तंब्रह्मनन्दन॥ मायाक्षेत्रंसमाख्यातंगंगाद्वारेसुपुण्यदे॥ ब्रह्मणस्थानतोयावद्योजनानिदशद्वयम्॥ प्रमाणंक्षेत्रराजस्यगदितंब्रह्मपुत्रकम्॥ अथद्रोणाश्रमप्रमाणम्॥ तत्क्षेत्राद्दक्षिणेभागेद्रोणाश्रमइतीरितः॥ गंगायमुनयोर्मध्येअष्टयोजनविस्तृतः॥ तीर्थेविस्तारएवास्ययोजनत्रयमीरितः॥ इदन्तुक्षेत्रान्तरम्॥ अथतत्रप्रसिद्धतीर्थनामानि॥ गंगाद्वारेकुशावर्त्तेविल्वकेनीलपर्वते॥ स्नात्वाकनखलेतीर्थेपुनर्जन्मनविद्यते॥ सर्वेदेवाःसगंधर्वायक्षकिन्नरतापसाः॥ तिष्ठन्तियेत्रतीर्थेहिसर्वेतेमुक्तिभागिनः॥ अथचण्डिकातीर्थम्॥ चण्डिकातीर्थराजेहिसकृत्स्नातोमहामुने॥ सधन्यःपुरुषोलोकेसफलंतस्यजीवितम्॥ अथदक्षेश्वरमहिमा॥ दक्षे

श्वरं महादेवं दृष्ट्वा वै भक्तितत्परः॥ कृतकृत्यो भ
वेन्मर्त्यो धन्यतां याति सत्वरम्॥ द्रोणतीर्थेपि
यः कश्चिच्छिवसन्यस्तमानसः॥ स्नानं दानं ज
पं होमं कुरुते भक्तितत्परः॥ तत्सर्वं कोटिगु=
णितं भवत्येव न संशयः॥ अथ रामतीर्थमहि
मा॥ रामतीर्थे च यः कश्चित्स्नानं वै प्रकरोति
हि॥ स याति शिवलोकं हि यावदिन्द्राश्चतुर्दश॥
अथ हृषीकेशमहिमा॥ हृषीकेशे तु यः कश्चि
द्ब्रह्मतीर्थे सुपुण्यदे॥ दृष्ट्वा श्रीभारतं देवं स्नाति
वै भक्तितत्परः॥ मुक्तिभागो भवेत्सद्यो नरना
थो भवत्यपि॥ एकरात्रमपि स्थित्वा नारायण
समो भवेत्॥ यमुनापि महाभागा तत्रायाति श
रीहरा॥ तत्संगते महातीर्थे प्रयागात्कोटिसं=
ख्यके॥ धन्यानां मानुषं जन्म तत्र भारतखण्डके
॥ तत्रापि हिमवद्देशे मायाक्षेत्रे विशेषत इत्यादि
॥ अथ गंगाद्वारनाम्निकथा स्कान्दे॥ महाभगी
रथो राजा सूर्यवंशधरः प्रभुः॥ आनयामास स्वर्गा
द्वै गंगां परमपावनीम्॥ स्वर्गान्निपतिता गंगा पृ
थिव्यामागता यदा॥ तदैवास्य द्विजश्रेष्ठ गंगा
द्वारमिति स्फुटम्॥ गंगाद्वारोत्तरं विप्र स्वर्गद्वा
रा स्मृता बुधैः॥ अन्यत्र पृथिवी प्रोक्ता गंगाद्वारो
त्तरं विना॥ गंगाद्वारसमं तीर्थं न कैलाससमो गिरिः

वासुदेवसमोदेवोनगंगासदृशंपरं॥ नगोदानसमंदानंत्रिषुलोकेषुविद्यतइति॥ अथविष्णुतीर्थमहिमा॥ ततोदक्षिणदिग्भागेविष्णुतीर्थेधनुःशते॥ यत्रस्नात्वापरंब्रह्मनीतोभवतिनिश्चितम्॥ तस्यचिन्हंप्रवक्ष्यामियेनतद्ज्ञायतेशुभम्॥ कृष्णसर्पोमहानेकोदृश्यतेफणिमण्डितः॥ भाद्रकृष्णचतुर्दश्यांजलमध्येप्रयातिच॥ तत्रस्नात्वापुनःशुभ्रेप्रविष्टोभवतितत्क्षणादिति॥ अथतत्रकौमुदतीर्थे॥ तत्रस्नानेविशेषः॥ सर्वतीर्थेषुयत्पुण्यंसर्वयज्ञेषुयत्फलम्॥ तत्फलंलभतेतत्रस्नानमात्रेणमानवः॥ तस्यचिन्हंप्रवक्ष्यामिमध्यान्हेमृगरूपधृक्॥ समायातिरविःस्नातुंरविवारेविशेषतः॥ अथात्रमुंचतेप्राणान्महापापैर्युतोऽपिवा॥ सगच्छतिपरंस्थानंयत्रब्रह्मादयःसुराः॥ तिथिविशेषेफलेविशेषः॥ यदिभाग्यवशाद्विप्रवैशाखेस्नातिमानवः॥ तस्यपुण्यबलंवक्तुंकल्पेनापिनशक्यते॥ आषाढ्यांचैवद्वादश्यांकार्त्तिक्यांवाविशेषतः॥ तथामार्गशिरेमासिद्वादश्यांदर्शकेपिवा॥ यःकरोत्यग्निपूजांचस्नानंदानंजपंतथा॥ सयात्युत्तमान्लोकान्पुनरावृत्तिदुर्लभानित्यादि॥ अथमाहेश्वरीपी

ठमहिमा॥ अथान्यत्ते प्रवक्ष्यामि पीठं परमदुर्लभम्॥ यत्रैकरात्राल्लभते सिद्धिं परमदुर्लभाम्॥ माहेश्वरीति विख्याता सर्वसिद्धिप्रदायिनी यत्र रुद्रः स्वयं साक्षाद्देवैः सन्निहितः सदा॥ माहेश्वरीति नाम्ना वै कृष्णा वर्णा महामुने॥ तस्या वै दर्शनाद्याति रुद्रलोकं दुरासदम्॥ इत्यादीनि नानाविधा निनानातीर्थानि महत्फलानि तत्रोपविष्टान्यधिकानि त्वन्यत्र तो वगन्तव्यानीनि शिवम्॥ ॥ ❋ ॥ इति श्रीमन्महाराजाधिराजमहाराजश्रीरामवंशजश्रीमाधवसिंहकारिते तीर्थसुधानिधौ मायापुरीतरङ्गः॥ ❋ ॥ अथ काशीमाहात्म्यश्रवणमहिमा॥ काशीखण्डे॥ श्रुता श्च सर्वधर्मास्तैर्महापुण्यकराशिभिः॥ श्रुतं यैः स्थिरचेतोभिः काशीमाहात्म्यमुत्तमम्॥ तथा कौर्मे॥ यः पठेदविमुक्तस्य माहात्म्यं शृणुयादपि॥ श्रावयेद्वा द्विजान् शान्तान्सोपि याति परां गतिम्॥ श्राद्धे वा दैवकार्ये वा रात्रावहनि वा द्विजः॥ नदीनां चैव तीरेषु देवतायतनेषु च॥ जपेदीशं नमस्कृत्वा स याति परमां गतिम्॥ लैंगे एतद्वः कथितं सर्वं कथासर्वस्वमादरात्॥ यः पठेच्छृणुयाद्वापि क्षेत्रमाहात्म्यमुत्तमम्॥ सर्वक्षेत्रेषु यत्पुण्यं तत्पुण्यं सकलं भवेत्॥ श्रावयेद्वा द्विजान् शान्तान्कृत

शौचान् जितेन्द्रियान्॥एवंचसर्वयज्ञानांफलं
प्राप्नोतिमानवः॥पाद्मेपि पातालखण्डेसूत
वाक्यम्॥शौनकेनभगवत्ताभृगुणाभृगुनंद
न॥शम्भुक्षेत्रस्यमहिमाप्रोक्तःसर्वहितेच्छ
या॥एतस्यश्रवणादेवपापसंघातमंदिरम्॥
सद्योविलयमायातितूलमग्नाविवाहितम्॥
स्रोतव्यमनसूयद्भिःपठनीयंचयत्नतः॥एन
सांप्रीतिनाशायप्रीतयेपार्वतीपतेः॥एतज्जपे
नसंतुष्टोमहादेवःसनातनः॥ तथा पाद्मेभृगुः
॥इत्थंतपोधनाःकाश्यामाहात्म्यंप्रोक्तवानह
म्॥यच्छ्रुत्वापिविलीयंतेपापानिसुमाहात्यपि
॥अथकाशीस्वरूपम्॥पद्मपुराणे॥ब्रह्मैवे
तन्निर्गुणंनिर्विकारंध्येयश्चेदंक्षेत्ररूपेणनित्यं
॥तिष्ठत्येवत्र्यंबकोप्यत्रनित्यंतद्रूपत्वात्सन्नि
धावेवचास्ते॥ विभूतिंस्वांदर्शयिष्यन्निरीशः
क्षेत्राकारंप्राप्यतीर्थीकृतिंच॥सनत्कुमारसं
हितायाम्॥यत्तेशिवानन्दमनंतमाद्यंयदात
योर्नित्यमभिन्नरूपम्॥दृश्यंसमस्तोपनिषत्सु
मुक्तेर्जानीहितेजस्तदिदोविमुक्तम्॥ज्योतिर्लिं
ङ्गं,त्वमेवार्येलिंगीचाहंमहेश्वरः॥ तदेतदपि
मुक्ताख्यंज्योतिरालोक्यतांप्रिये॥काशीखंडे
॥परंब्रह्मयदाम्नातंनिःप्रपंचंनिरात्मकम्॥

निर्विकल्पंनिराकारमव्यक्तंस्थूलसूक्ष्मवत् ॥
तदेतत्सेत्रमापूर्यस्थितंसर्वंमहेश्वरि॥शम्भोःश
क्तिरियंकाशीकाचित्सर्वैकगोचरा॥शम्भुरेव
हिजानीयादेतस्याःपरमंसुखं॥ब्रह्मवैवर्त्ते।वि
ष्णुरुवाच॥छत्राकारंपरंज्योतिर्दृश्यतेगगनेचरं
॥तत्सारंपरमंज्योतिःकाशीतिप्रथितंश्रुतौ॥र
त्नंसुवर्णखचितंयथाभवेत्तथापृथिव्यांखचिता
हिकाशिका॥नकाशिकाभूमिमयीकदाचित्त
तोनमज्जेन्ममसत्कृतिर्यत्॥जडेषुसर्वेष्वपिम
ज्जमानेष्वियंचिदानंदमयीनमज्जति॥स्वयंनि
मग्नाकथमुद्धरेत्परान्लोकेचवेदेचविचार्यमेत
त्॥तत्रैवब्रह्मवाक्यम्॥दृष्टंतत्काशिकारूपंनि
र्मितंनमयापरं॥वदंतिलोकाःसततंकाशीके
शवनिर्मिता॥निर्माणंतुजडस्यात्रक्रियतेनोप
रात्मनः॥उद्धरिष्यामिचमहींवाराहरूपमास्थि
तः॥तदापुनःपृथिव्यांहिकाशीस्थास्यतिमत्प्रि
या॥अथकाशीनाममहिमा नारदीये॥बहु
नात्रकिमुक्तेनवाराणस्यागुणान्प्रति॥नामापि
गृण्हतांकाश्याश्चतुर्वर्गोनदूरतः पाद्मे का
शीतिवर्णद्वितयंस्मरंस्त्यजतिपुद्गलम्॥यत्रका
पिभवेत्तस्यकैलासेवसतिस्फुटा॥पुद्गलंशरीरं
स्कान्दे॥काशीकाशीतिकाशीतिरसनारससंयु

ता॥ यस्यकस्यापिभूयश्चेत्सरसत्तोनचेत्तरः
॥ तथा तावद्गर्जन्तिपापानिब्रह्महत्यादिकान्य
लम्॥ यावन्नामनगृण्हन्तिकाश्याःपापाचला
शनेः॥ ब्रह्महत्यादिपापानियस्यानाम्नोपिकी
र्तनात्॥ त्यजंतिपापिनंकाशीमाकेनेहोपमी
यते॥ तथा वाराणशीतिकाशीतिमहामंत्रमि
मंजपन्॥ यावज्जीवंत्रिसन्ध्यन्तुजंतुर्जातुनः
जायते॥ तत्क्षेत्रनामस्मरणान्नसभूयोभिजा
यतइतिच॥ यस्तुकाशीतिकाशीतिद्वित्रिर्जपे
तिपुण्यवान्॥ अपिसर्वपवित्रेभ्यःसपवित्रत
रोमहान्॥ तथा॥ वाराणशीतिकाशीतिरुद्रा
वासइतिस्फुटम्॥ मुखाद्विनिर्गतंयेषांतेषांन
प्रभवेद्यमः॥ येनबीजाक्षरयुतंकाशीतिहृदि
धारितम्॥ अबीजानिभवंत्येवकर्मबीजानित
स्यवै॥ श्रुतंकर्णामृतंयेनकाशीत्यक्षरयुग्मकं
॥ नसमाकर्णयत्येवसपुनर्गर्भजांकथाम्॥ ब्र
ह्मवैवर्त्ते॥ यथाविष्णोः शंकरस्यापिनाम्नालो
कःशोकंनाश्यमोक्षंप्रयाति॥ वाराणस्यानाम
गृण्हन्विशेषातीर्त्वामृत्युंमृत्युजेतास्वयंस्यादि
त्यादि॥ नाश्येतिल्यवार्षः॥ अथकाश्यादिशब्द
निर्वचनम्॥ काशीखण्डे॥ काशतेत्रयतोज्यो
तिस्तदनाख्येयमीश्वरः॥ अतोनामापरंचास्तु

काशीत्तिप्रथितंविभो॥ तथा॥ काशोब्रह्मेति
विख्यातंतद्ब्रह्मप्राप्यतेयतः॥ तस्मात्काशी
गुणान्सर्वैतत्रतत्रवदन्तिहि॥ तथा॥ काशोब्र
ह्मेतिविख्यातंतद्विवर्त्तोजगद्भ्रमः॥ अविमुक्तं
तदेवाहुःकाशीतिब्रह्मवादिनः॥ मात्स्ये॥ ईश्व
रवाक्यं॥ विमुक्तंनमयायस्मान्मोक्ष्यतेवाक
दाचन॥ महाक्षेत्रमिदंतस्मादविमुक्तमितिस्मृ
तम्॥ काशीखण्डे अगस्त्यउवाच॥ अविमुक्त
मिदंक्षेत्रंकदारभ्यभुवस्तले॥ परांप्रथितिमाप
न्नंमोक्षदंचाभवत्कथम्॥ वाराणसीतिकाशी
तिरुद्रावासइतिप्रभो॥ महाश्मशानइतिचकथं
ख्यातंशिखिध्वज॥ स्कन्दउवाच॥ मुनेप्रलय
कालेपिनतत्क्षेत्रंकदाचन॥ नविमुक्तंशिवाभ्यां
यद्अविमुक्तंततःस्मृतम्॥ यद्यपिमंदराचल
गतेनसदाशिवेनचिरकालंक्षेत्रंत्यक्तमेव॥ त
थापिलिङ्गरूपेणकदापिनत्यक्तमित्याशयः॥
अतएवतत्रैवोक्तम्॥ मंदराद्रिगतेनापिक्षेत्रंनै
तत्पिनाकिना॥ विमुक्तंलिङ्गरूपेणअविमुक्तंत
तःस्मृतमिति॥ पिपासुनाचदेवेनमंदरंचित्रकंद
रम्॥ निजमूर्त्तिमयंलिङ्गमविज्ञातंविधेरपि॥ स्था
पितंसर्वसिद्धानांसाधकेभ्यःसमर्पकम्॥ विपन्ना
नांचजन्तूनांदातुंनैश्रेयसींश्रियम्॥ सर्वेषामि

हसंस्थानांक्षेत्रंचैवाभिरक्षितुमिति॥नामाविमु
क्तमभवदुभयोः क्षेत्रलिङ्गयोरितिच आदि=
लिंगमिदंप्रोक्तं श्रीविश्वेश्वरपूजितमिति॥लैंगे
॥ अविशब्देनपापन्तुकथ्यतेवेदवादिभिः॥तेन
पापेनतत्क्षेत्रंवर्जितंवरवर्णिनीत्यादि॥पाद्मे
आनन्दकाननंतद्धिशंकरस्यातिवल्लभम्॥न
विमुंचतिविश्वात्मांअविमुक्तं ततः स्मृतमिति
॥तथा काशीखण्डे॥ अस्यानन्दवनंनामपुरा=
कारिपिनाकिना॥क्षेत्रस्यानन्दहेतुत्वादविमु
क्तंनिरन्तरम्॥ तथा॥ येतुवर्षेषवोदेवादिवि
देविप्रकीर्त्तिताः॥ वातेषवोंतरिक्षेपे येभुव्यंतेष
वःप्रिये॥रुद्राद्दशदशप्राच्याः प्राचीप्रत्यगुदक्
स्थिताः॥ऊर्ध्वेदिवस्थाःयेरुद्राः पठ्यंतेवेदवादि
भिः॥असंख्याताःसहस्राणियेरुद्राअधिभूत
ले॥तेसर्वेभ्योधिकाःकाश्यांजंतवोरुद्ररूपिणः
॥रुद्रावासस्ततःप्रोक्तमविमुक्तंघटोद्भव॥तथा
॥स्मशब्देनशवःप्रोक्तःशानंशयनमुच्यते॥ नि
र्वचंतिश्मशानार्थंमुनेशब्दार्थकोविदाः॥महा
न्त्यपिचभूतानिप्रलयेसमुपस्थिते॥शेरतेऽत्रश
वोभूत्वाश्मशानंचततोभवेत्॥ असिश्चवर्णाचैव
क्षेत्ररक्षाकृतेकृते॥ वाराणसीतिविख्याताततदा
रभ्यमहामुने॥ममलिङ्गानिसर्वाणित्वङ्कुराणि

चसर्वशः॥ आनन्दादुदितानीतिध्यानन्दवनमुच्य
तेत्यादि॥ ॥अथान्यत्रस्थितस्यापिकाशीस्मर्णे
फलम्॥नारदीये॥योजनानांशतस्थोपियोविमु
क्तंस्मरेद्धृदि॥बहुपातकपूर्णोपिनसपापैःप्रबाध्य
ते॥ब्रह्मवैवर्त्ते॥स्मरंतियेनराःकाशींयत्रकुत्रा
पिसंस्थिताः॥तेप्यघौघविनिर्मुक्ताभवंतिज्ञान
भागिनः॥ तथा॥मनसायेःकाशिकायाःस्मृत
मोदार्यमार्यकाः॥ तेषांमनोनस्मरतिस्मरारि
नगरींविना॥नारदीये॥काशीखण्डेच॥ममप्रि
यस्यक्षेत्रस्ययोविमुक्तस्यसंस्मरेत॥प्राणप्र
याणसमयेदूरगोप्यघवानपि॥सपापपूगमु
त्सृज्यस्वर्गभोगान्समश्नुते॥काशीस्मरणपु
ण्येनस्वर्गाद्भ्रष्टोद्विजायते॥पृथिव्यामेकराड्भू
त्वाभुक्त्वाभोगाननेकशः॥प्राप्याविमुक्तंतत्पुण्या
न्निर्वाणपदभाग्भवेत॥कौर्मे॥ येस्मरंतिपरंका
लंविदंतिचपुरीमिमाम्॥तेषांविनश्यतिक्षिप्रमि
हामुत्रचपातकम्॥ब्रह्मपुराणे॥ संस्मरिष्यं
तियेस्थानमविमुक्तंमुदानराः॥निर्धूतसर्वपा
पास्तेभविष्यंतिगणोपमाः॥ब्रह्मवैवर्त्ते॥ का
शीकाशीतिकाशीतिबहुधासंस्मरन्द्विजः॥नपश्य
तीहनरकान्वर्त्तमानान्स्वयंकृतान॥ भवः
अद्यारभ्यमहाभागायेस्मरिष्यन्तिकाशिकाम॥

तेषां पापक्षयो भूयो मोक्षबीजं भवत्युत॥ अविमुक्तं महाक्षेत्रं स्मरन्प्राणांस्तु यस्त्यजेत्॥ दूरदेशांतरस्थोपि सोपि जातु न जायते॥ आनन्दकाननं यस्य चित्तं संस्मरते सदा॥ इति स्मरणमहिमा

अथ काशीगमनमहिमा॥ तत्र गमने विष्णुप्रार्थना च॥ सनत्कुमारसंहितायां॥ वाराणसीमेव यदा प्रवृत्तो गन्तुं नरस्तस्य समस्तपापम्॥ विनश्य सार्द्धं गणकैर्गुणैस्तैः प्रीतस्सुहृन्नृत्यति धर्मराजः॥ तथा काशीखण्डे॥ कृत्स्नस्य लोकस्य नृपस्य बन्धोर्मित्रस्य पित्रोर्महतो गुरोर्वा॥ याच्यामथाज्ञामथ वोपदेशं कुर्य्यान्न काश्यां गमनस्य विघ्नम्॥ याच्यादिरूपं विघ्नमिति योजना॥ काशीखण्डे॥ ब्रह्महा योभिगच्छेत्तु दैवात् वाराणसीं पुरीम्॥ तस्य क्षेत्रस्य माहात्म्याद्ब्रह्महत्या निवर्त्तते॥ कौर्म्ये॥ आगच्छतामिदं स्थानं सेवितुं मोक्षकांक्षिणाम्॥ मृतानां च पुनर्जन्म न भूयो भवसागरे॥ लैंगे काशीं प्रक्रम्य॥ सत्यं सत्यं पुनः सत्यं त्रिसत्यं नान्यतः शुभे॥ शीघ्रं तत्रैव संयातु यदीच्छेन्मामकं पदम्॥ तथा काशीखण्डे॥ उद्दीयः सर्वतो देशाद्यानं वाराणसीं प्रति॥ उद्दीयानो महाबंध एव मुक्तः प्रकल्पते॥ सर्वेषामिह पापानां प्रायश्चित्तचिकीर्षया॥ निशंकैरेव वक्तव्यं प्रमाण

ह्नेरिदंवचः।। ततःसर्वंपरित्यज्यकृत्वामनसि
निश्चयम् आनन्दकाननंयाहियत्रविश्वेश्वरःस्व
यम् मात्स्ये।। यदिपापोयदिशठोयदिवाधार्मिको
नरः।। मुच्यतेसर्वपापेभ्योह्यविमुक्तंव्रजेद्यदि।।
तथा।। तत्रैवब्रह्मवैवर्त्ते।। जयकेशवदेवेशजयका
शीप्रियाच्युत।। काशींप्रापयदेवेशदेहिवासंज
नार्दनेत्यादि।। अथकाशीदर्शनमहिमा काशीख
ण्डे।। तुलापुरुषदानेनयत्पुण्यंसम्यगाप्यते।। का
शीदर्शनमात्रेणतत्पुण्यंश्रद्धयास्तुवै तथा।। ये
दृष्टादूरतःकाशीतेपुण्याःपापशत्रवः।। स्पृष्टाये॰
स्तेपिचततःश्रेष्ठामोक्षैकभाजनाः।। ब्रह्मपुराणे।
आगमिष्यन्तियेद्रष्टुंसज्जनायोजनेनतु।। तेब्रह्म
हत्यामुक्तास्तुभविष्यन्तिममानुगाः मात्स्ये।। अ
ज्ञानातज्ज्ञानतोवापिवर्तमानमतीतकं।। सर्वंतस्य
चतत्सापंक्षेत्रंदृष्ट्वाविनश्यति पाद्मे।। अस्याःसं॰
दर्शनंव्याससर्वपातकघातकं।। अस्यांनिवासोनि
र्वाणंसाधयत्यंजसामुने।। ब्रह्मवैवर्त्ते।। पश्यतात
परमार्चितांपुरींयोगिभिः सुकृतिभिर्मुनीश्वरैः
।। यांनिरीक्ष्यपुरुषःपुराकृतैःपातकैः शरमितै
र्वियुज्यते।। जन्मान्तरसहस्रैस्तुयत्पुण्यंसमुपा
र्जितम्।। तेनपुण्यकदम्बेनदर्शनंयातिकाशिका
तथा तत्रैवमनुः।। ब्रह्मन्काशींकाशितांशेषत

त्वांयेयेलोकाः संस्मरन्यत्रकुत्र तेतेमुक्ताःकिं
पुनर्द्दर्शनात्त्वादृष्ट्वायेवै काशिकांसंगताश्च॥
अथकाशीप्रवेशमहिमा ब्रह्मवैवर्ते॥महा
पातकयुक्तोपिश्रद्धयारहितोपिवा॥काशीप्र
वेशादनघःसम्यक्स्थित्वासुखीभवेत्॥लिंग
पुराणे॥वाराणस्यान्तुयःकश्चित्प्रविष्टोब्रह्म
घातकः॥तिष्ठतेबाह्यतःपापंनिर्गतंगृह्यतेपु
नरिति स्कान्देपि॥पंचक्रोशान्तरेराजन्ब्रह्म
हत्यानसर्पति॥तथापिशाचमोचनाख्याने॥
प्रवेशोनास्तिचास्माकंप्रेतानांतपसांनिधे॥म
हतांपातकानांचवाराणस्यांशिवाज्ञयेति॥त
थाहिपाद्मे॥अत्रप्रविष्टमात्रस्यजंतोःपापंपुरा
र्जितं॥विनाशमाप्नोतिपरंपुण्यराशिश्चवर्द्धते॥
मत्स्यपुराणे॥वाराणसीत्रिभुवनत्रयसारभू
ताधन्यासदाममपुरीगिरिराजपुत्रि॥अत्राग
ताविविधदुष्कृतकारिणोपिपापक्षयाद्विरज
सःप्रतिभांतिमर्त्याः विरजसोधौतपापाः शि
वपुराणे॥अविमुक्तविशिष्टानांसद्यःपापंवि
लीयते॥लैंगेपि॥ब्रह्महायोभिगच्छेत्तुअवि
मुक्तंकदाचन॥तस्यक्षेत्रस्यमाहात्म्याद्ब्रह्मह
त्यानिवर्तते॥तथा जन्मान्तरसहस्रेणय=
त्पापंपूर्वसंचितम्॥अविमुक्तप्रविष्टस्यतत्स

र्वन्नजतिक्षयम्॥ कौर्मे॥ महापातकिनोयेचये
चैभ्यःपापकृत्तमाः॥ वाराणसींसमासाद्य
तेयांतिपरमांगतिम्॥ तथा॥ मेरुमंदरमात्रा
पिराशिःपापस्यकर्मण॥ अविमुक्तंसमासा
द्यतत्क्षणाद्व्रजतिक्षयम्। काशीखण्डे॥ काशी
प्राप्तिरयंयोगःकाशीप्राप्तिरिदंतपः॥ काशीप्रा
प्तिरिदंदानंकाशीप्राप्तिःशिवेकृता॥ तथा॥ म
त्स्यपुराणे॥ सर्वगुह्योत्तमंस्थानंममप्रियतमंशु
भम्॥ धन्याःप्रविष्टाःसुश्रोणिममभक्त्याद्वि
जातयः॥ अविमुक्तंशुभंप्राप्य मद्भक्ताःकृत
निश्चयाः॥ निर्धूतपापाविमलाभवंति विगत
क्लमाइत्यादि॥ अथकाशीप्रवेशेनकालविचा
रः॥ काशीखण्डे॥ अथवाकाशिसम्प्राप्तौ नवि
चिन्त्यंशुभाशुभम्॥ तदैवहिशुभःकालोयदैवा
प्येतकाशिका॥ इदंचासंभवविषयम्॥ सम्भ
वेतुउचितःकालः अथवेतिवचनादित्यादि॥
अथकाश्यादिक्षेत्रपरिमाणम्॥ तत्रपाद्मे पा
तालखण्डे॥ परिमाणंचवक्ष्यामितन्निबोधत
सत्तमाः॥ मध्यमेश्वरमारभ्ययावद्देहलिविघ्न
पम्॥ सूत्रंसंस्थाप्यतद्दिक्षुभ्रामयेन्मण्डलाकृ
ति॥ तत्रयाजायतेरेखातन्मध्येक्षेत्रमुत्तमं
म्॥ काशीतियद्विदुर्वेदास्तत्रमुक्तिःप्रतिष्ठिता

काश्यंतःपरमंक्षेत्रंविशेषफलसाधनम्॥वा
राणशीतिविख्यातंतन्मानंनिगदामिवः॥द
क्षिणोत्तरयोर्नद्यौवर्णासिश्च पूर्वतः॥जा
न्हवीपश्चिमेवापिपाशपाणिर्गणेश्वरः॥स्या
न्मत्तःसंस्थितंदिव्यंविशेषफलसाधनम्॥
अविमुक्तमितिख्यातंतन्मानंचब्रवीमिवः।
विश्वेश्वराच्चतुर्दिक्षु धनुःशतयुगोन्मितम्।
अविमुक्ताभिधंक्षेत्रंमुक्तिस्तत्रनसंशयः॥गो
कर्णेशःपश्चिमेपूर्वेतश्चगंगामध्यादुत्तरेभा
रभूतः॥ब्रह्मेशानोदक्षिणेसंप्रदिष्टस्तत्तुप्रो
क्तंभवनंविश्वभर्तुः॥विश्वभर्त्तुर्भवनमंतर्गृ
हम्॥ततश्चकाशीवाराणस्यविमुक्तान्तर्गृ
हाख्यानांचतुर्णांक्षेत्राणामुत्तरोत्तरंपूर्वपूर्वा
तर्वर्त्तिपूर्वपूर्वापेक्षयान्यूनपरिमाणंचेतिसं
पिंडितार्थः॥तथा॥ब्रह्मपुराणे रुद्रंप्रतिब्र
ह्माकाशीक्षेत्रमाह॥पंचक्रोशप्रमाणन्तुक्षे
त्रंदत्तंमयातव॥क्षेत्रमध्येयदागंगागमिष्य
तिसरित्पतिम्॥तेनसामहतीपुण्यापुरीरुद्रभ
विष्यति॥पुण्याचोदङ्मुखीगंगाप्राचीचापि
सरस्वती॥उदङ्मुखीयोजनेद्वेगच्छतेजान्ह
वीनदी॥मध्यमेश्वरात्सर्वदिक्षुपंचक्रोशंप्रमा
णमित्यर्थः॥यत्तुब्रह्मवैवर्त्ते कामकलावचः

अहोमहालिंगमयंजनार्दनंपश्यामिकाश्यां परमात्मस्वरूपम्॥अनाहतोयोजनपंचकात्मकंविस्तारिणव्यूतियुगंतुसार्द्धमिति॥अत्रयोजनंक्रोशास्तेनसमंततः॥पंचक्रोशतेवेतिनविरोधः॥वाराणसीक्षेत्रंतुवरणास्योरंतरा॥तदुक्तंकौर्मे॥वरणायास्तथैवास्यामध्येवाराणसीपुरीति मात्स्ये॥द्वियोजनमथार्द्धंचपूर्वपश्चिमतस्थितम्॥ अर्धयोजनविस्तीर्णंदक्षिणोत्तरतस्थितम्॥ वरणाचनदीयावद्यावच्छुष्कनदीतथा॥एवंक्षेत्रस्यविस्तारः प्रोक्तोदेवेनधीमता॥शुष्कनदीअसी अत्रग्रथमार्धेकाश्याएवविस्तारउक्तः॥ नतुवाराणस्यातस्यांपूर्वतोजान्हवीति पाद्मे जान्हव्याएवपूर्वावधिकरणात्॥क्षेत्रस्यसंदर्श्येचपूर्ववेलांपृष्ठेनगंगाप्रवहत्यजस्त्रमितिसनत्कुमारसंहितोक्तेश्च॥ अतोदशक्रोशपरिमितेकाशीक्षेत्रेगंगायामध्येव्यवच्छिन्नेपूर्वार्द्धंपरित्यज्यपश्चिमार्धेगंगासीदेहलीविनायकवरणारूपैश्चतुर्दिगवधिभिरवच्छिन्नोदेशोवाराणसीतिसिध्यति॥तथा॥मात्स्यएवं द्वियोजनन्तुविस्तीर्णंपूर्वपश्चिमतःस्मृतम्॥ अर्द्धयोजनविस्तीर्णंतत्क्षेत्रंदक्षिणोत्तरम्॥वरणाचनदीयावद्या

वत्सुष्कनदीतुवै॥ भीमचंडीसमारभ्यपर्वते=
श्वरमंतिके॥ इदमपिपूर्वेणव्याख्यातम्॥ अ
त्रचद्वियोजनमित्यदूरव्यवधानेनस्थूलपरिमा
णाभिप्रायेणवासार्द्धद्वियोजनपरमेव॥ पाद्मेसृ
ष्टिखण्डे॥ वरणाचाप्यसीश्चैवद्वेनद्यौसुरनिर्मि
ते॥ अंतरालेतयोःक्षेत्रंबुद्ध्यानविशतेक्वचित्॥
अत्रसर्वत्रशास्त्रोक्तासंगमेश्वरप्रदेशस्थैवा=
सीगृह्यते॥ तेनकदाचिद्गंगाप्रवाहस्यदूरदेशग
मनेननगराधस्तान्निम्नतयाऽसीप्रवाहवहने
पिगंगातीरस्यवाराणस्यंतः पाताविघातः पं
चक्रोशयात्रया—पीदमेववाराणसीक्षेत्रंप्रद
क्षिणीक्रियते॥ पंचक्रोशयात्रासमाख्यापिप्र
क्समध्यार्द्धगंगादेहलीविनायकावधिकस्य
क्षेत्रस्यक्रोशपंचकपरिमितत्वादुपपन्ना॥ य
त्तुक्षेत्रमध्यादितिवचने यद्यपिक्षेत्रमध्येगंगा
प्रवाहःप्रतीयतेतथाप्यंतरालेतयोःक्षेत्रमिति
ब्रह्मपुराणात्क्षेत्रमध्यपदंक्षेत्रस्पर्शमात्रपरम्
ग्राममध्येनगतइतिवदिति तदसत् क्षेत्रमध्या
दितिवचसः॥ काशीपरतयावाराणसीपरत्वाभा
वस्योक्तत्वात्॥ अविमुक्तप्रमाणन्तुलिंगपुरा॰
णे॥ कृत्तिवासंसमारभ्यक्रोशंक्रोशंचतुर्दिश
म्॥ योजनंचैवतत्क्षेत्रंगणैरुद्रैश्चसंवृतम्॥९

तथा॥क्षेत्रमध्यपरंलिंगंभूमिंभित्वासमुत्थितम्॥मध्यमेश्वरसंज्ञंतुख्यातंसर्वसुरासुरैः॥अस्मादारभ्यलिंगात्तुक्रोशंक्रोशंचतुर्ष्वपि॥योजनंविद्धितत्क्षेत्रंमृत्युकालेमृतप्रदम्॥एषक्षेत्रस्यविस्तारःपुराणेपरिकीर्त्तितः॥अस्मात्तुपरतोदेविविहारोनैवविद्यते॥स्कान्दे॥चतुःक्रोशंचतुर्दिक्षुक्षेत्रमेतत्प्रकीर्त्तितम्॥योजनंविद्धिचार्वंगिमृत्युकालेमृतप्रदम्॥तथा॥मुक्तिक्षेत्रप्रमाणंचक्रोशंक्रोशंचसर्वतः॥आरभ्यलिंगादस्माच्चपुण्यदान्मध्यमेश्वरात्॥अत्रलैंग स्कान्द॥लोचनयाकृतिवासमध्यमेश्वरयोश्चतुर्दिक्षुयोजनमितमविमुक्तम्॥पाद्मेतु विश्वेश्वरात्सर्वतोधनुः शतद्वयमितम्॥तथाचात्रपरिमाणविकल्पः योजन मित्येतत्तुवचनत्रयेपिप्रथमार्धोक्ताविमुक्तक्रोशेनसहयोजनस्यपंचक्रोशात्मकत्वात्काशीपरिमाणपरमितिनकाचिदनुपपत्तिः॥कृतिवासस्यचमध्यमेश्वरसामीप्याद्ल्पांतरत्वानदोषाय॥अंतरगृहपरिच्छेदश्च काशीखण्डे पूर्वतोमणिक र्णीशोब्रह्मेशोदक्षिणेस्थितः॥पश्चिमेचैवगोकर्णोभारभूतस्तथोत्तरे॥इत्येतदुत्तमंक्षेत्रमविमुक्तंमहाफलम्॥अविमु-

क्तःतन्मध्येपूर्वतोमणिकर्णिकेश्वरस्यावधि
त्वोक्तावपिपाद्मेकवाक्यतयागंगापारमेवते
नोपलक्ष्यतेनेनगंगार्धजलमृतस्यक्षेत्रचतुष्ट
यमरणसिद्धिः॥विकल्पएवेत्यन्येतदयंसंक्षेपः
सीमाविनायकेभ्यश्चबहिःकाश्याःप्रमाण
तः॥तावत्क्षेत्रंविजानीयाद्यावद्धनुःशतत्र
यमितिवचनात्पश्चिमेभीमचंड्याः परतो
धनुः शतत्रयमितदेशेनसहपूर्वतोगंगापारे
णचसार्द्धंवर्तुलंकाशीक्षेत्रंगंगातुतन्मध्ये
॥वहतिक्षेत्रमध्यायद्यदागंगेतिवचनात्॥गंगा
सीभीमचंडीपाशपाणिवरणांतर्गतंक्षेत्रंवा
राणसीपंचक्रोशयात्रायांचक्षेत्रबहिष्ठस्या
पिपृथ्वीश्वरसुयूपसरोवृषभध्वजादेर्गमनंव
चनंबलाद्भवति॥स्कांदलिंगवशान्मध्यमेश्व
रकृतिवाससमंताद्योजनमितमविमुक्तम्॥
पाद्मेतुविश्वेश्वरतः समंताद्धनुःशतद्वयमित
म् अंतर्गृहंतुपूर्वादिषुगंगामध्यब्रह्मेश्वरगो
कर्णेश्वरभारभूतेश्वरावधिकम्॥ काशीक्षेत्रा
द्बहिः॥समंताद्योजनंदेवभूमिरितिब्रह्मवैवर्त
वचनात्॥वामनपुराणेतुहरिणामहेश्वरंप्रति
क्षेत्रांतरमप्युक्तम्॥ योसौप्राङ्मण्डलेपुण्ये
महेशप्रभवोव्ययः॥प्रयागेवसतेनित्यंयोग

शायीतिविश्रुतः॥ चरणाद्दक्षिणात्तस्यविनिर्यो ताशरिद्वरा॥ विश्रुतावरणेत्येवस्वर्गभाजोमृता स्ततः॥ काश्याश्चतुर्दिशंदेवियोजनंस्वर्गभूमि का॥ मृतास्तत्रहिगच्छंतिस्वर्गंसुकृतिनांपदम्॥ सव्यादन्याद्वितीयाचअसिरित्येवविश्रुता॥ ते उभेसरितांश्रेष्ठेलोकपूज्येवभूवतुः॥ तयोर्मध्ये तुयोदेशस्तत्क्षेत्रंयोगशायिनः॥ त्रिलोक्यांप्रव रंतीर्थंसर्वपापप्रमोचनम्॥ नतादृशोस्तिगग नेभूम्यांनचरसातले॥ तत्रास्तिनगरीपुण्या ख्यातावाराणसीशुभा॥ यस्यांहिभोगिनोना शंप्रयांतिभवतोलयम्॥ इतिकाशीक्षेत्रपरि माणम्॥ अथकियत्कालंकाशीवासफलम्॥ स्कान्दे॥ तीर्थांतरेगवांकोटिंविधिवद्यःप्रयच्छ ति॥ एकाहंयोवसेत्काश्यांकाशीवासीतयो र्वरः॥ तथा॥ अहोरात्रंस्थित्वाभवतिसुकृती पापरहितस्त्रिरात्रंयस्तिष्ठेत्सखलुसुखमोक्षैक निलयः॥ निवासंयेकुर्युःविततमधिकारानुगु णितम्॥ नतेधर्मात्मानःपुनरपिभवभ्रान्तिपु जुषः॥ त्रिरात्रमपियेकाश्यांवसंतिनियतेन्द्रि याः॥ तेषांपुनंतिनियतंस्पृष्ट्वाश्चरणरेणवः॥ तथा॥ यत्पुण्यमश्वमेधेनयत्पुण्यंराजसूयतः॥ काश्यांतत्पुण्यमाप्नोतित्रिरात्रवसनाद्यमे॥

मात्स्ये॥ मासमेकं वसेद्यस्तु लब्धाहारो जितेंद्रियः॥ सम्यक्तेन व्रतं चीर्णं दिव्यं पाशुपतं महत्॥ जन्ममृत्युभयं तीर्त्वा स याति परमां गतिम्॥ इदं चान्यत्र मृतस्यापि काशीवासमात्रस्य मुक्तिबीजतया जन्मान्तराभिप्रायेण परंपरया परमगतिरूपमोक्षप्राप्तिः फलं ज्ञेयम्॥ अत एवोक्तम्॥ बहुकालमुषित्वा तु नियतेंद्रियमानसः॥ यद्यन्यत्र विपद्येत दैवयोगाच्छुचिस्मिते॥ सोपि स्वर्गसुखं भुक्त्वा भूत्वा क्षितिपतीश्वरः॥ पुनः काशीमवाप्यार्यैविंदेन्निःश्रेयसं परमिति॥ तथा॥ एकाहारस्तु यस्तिष्ठेन्मासं तत्र वरानने॥ यावज्जीवकृतं पापं मासेनैकेन शुद्ध्यति॥ इदं काश्यां मासमुषित्वान्यत्र मृतस्य अमोक्षरूपत्वात्॥ तावज्जीवमिति॥ अंतर्गृहयात्राद्यसमर्थस्य समर्थस्यापि वा तदकुर्वाणस्यैकाहारत्वादिधर्मविशिष्टमासवासाद्यावज्जीवकृतं मानसादि क्षुद्रपापं नश्यतीत्यर्थः॥ तेन नान्यत्र कृतस्य पापस्य नाशस्तस्य काशीप्रवेशान्नाशात्॥ नाप्यत्रैव कृतमहापातकस्य तस्यैतावन्मात्रेण नाशासंभवात्॥ न क्षुद्रपापस्य अंतर्गृहयात्रादिना नाशादित्यादि विकल्पाः परिहृता भवंति॥ यद्वा॥ यावज्जीवकृतपापवासना नश्यतीत्यर्थः॥ स्कान्दे॥ निमे

षमात्रमपि योह्यविमुक्तेति भक्तिमान्॥ ब्रह्मच
र्येसमायुक्तस्तेनतप्तंमहत्तपः॥ संवत्सरं वसेत्त
त्रजितक्रोधोजितेन्द्रियः॥ अपरस्तु विपुष्टांगः
परान्नपरिवर्जकः॥ परापवादरहितःकिंचिद्दा
नपरायणइत्यादि॥ अथक्षेत्रसंन्यासः॥ ब्रह्म
वैवर्त्ते आनन्दाख्येकाननेएव संतिक्षेत्रन्यासं
संविधायात्रपुत्र तैर्वस्तव्यम् रुद्ररूपैर्हियत्ना
द्यतोहिरुद्रे धर्मपालःप्रसिद्धः॥ अनेकजन्मसु
महत्साधनैर्ज्ञानमुत्तमम्॥ प्राप्नुवंति तदेकेनज
न्मनासाधुवासिनः॥ अविमुक्तंसमासाद्यनत्य
जेन्मोक्षकामुकः॥ क्षेत्रन्यासंदृढंकृत्वावसेद्ध
र्मपरःसदा॥ यथापतिव्रतानारीभर्तारमुपगच्छ
ति॥ तथासाहसमालंब्यकाशीमनुगतोभवेत्
॥ तथावाराणसींसमास्थाययोवहिर्गंतुमिच्छ
ति॥ तदन्नंवर्जयेद्धीमांश्चांडालस्यान्नवत्सदा॥
मोहेनापिबहिर्गंतुमनुज्ञांयःप्रयच्छति॥ रौरवा
दिषुघोरेषुनरकेषुपतत्यधः॥ तथा॥ यस्याःप्र
सादादन्यास्तुपुर्योमोक्षंवितन्वते॥ तांकाशीं
कोनसेवेत मोक्षार्थीसर्वदाशुभाम्॥ तथा॥ व
संतिपापानहिकाशिकायांवसंतिचेदत्रमृति
र्नजायते॥ मृतिर्भवेच्चेन्नहियातनाक्षयः स्त्र
योभवेन्मोक्षसुखेषुधिक्कृतः॥ तथा॥ तीर्थानि

कृत्वाकाश्यांतुवसेन्निर्व्यौकुलंसदा॥ नतुकाश्या
प्रगंतव्यंतीर्थान्यत्रवसंतियत्॥ सनत्कुमार
संहितायाम्॥ नष्टेषुसर्वेषुकलौतुपापेष्वास
द्यकाशींशिवराजधानीम्॥ लिंगंप्रतिष्ठाप्यवर
स्वनाम्नावसेत्सदाविघ्नशतैर्हतोपि॥ काशीख
ण्डे॥ ज्ञात्वाक्षेत्रस्यमाहात्म्यंयोवसेत्कृतनिश्चयः
तंतारयतिविश्वेशोजीवंतंत्वथवामृतम्॥ तथा॥
कृत्वावैनैष्ठिकींदीक्षामविमुक्तेवसंतिये॥ तेषांत
त्परमंदानंददाम्यंतेपरंपदम्॥ काशीखंडे॥
वरंवाराणसीवासीजटीमुंडीदिगंबरः॥ नान्य
त्रच्छत्रसंच्छन्नोवसुधामंडलेश्वरः॥ वरंवारा
णसीभिक्षानलक्षावधिपोन्यतः॥ लक्षाधीशो
विशेद्गर्भंतद्भिक्षाशीनगर्भभाक्॥ तथा॥ कःप्रा
प्यकाशींदुर्मेधः पुनःस्यक्तुमिहेहते॥ अनेक
जन्मजनितकर्मनिर्मूलनक्षमामित्यादि॥ अ
थनानाकाम्यकर्माणि ब्राह्मेमात्स्येच॥ तत्र
दीपप्रदानेनज्ञानचक्षुरतींद्रियम्॥ प्राप्नोति
धूपदानेनस्थानंरुद्रनिषेवितम्॥ तथा॥ अर्च
येद्यश्चमांदेविअविमुक्तेवरानने॥ तस्यधर्मं
प्रवक्ष्यामियावदाप्नोतिमानवः॥ दशसौवर्णि
कंपुष्पंयोविमुक्तेप्रयच्छति॥ अग्निहोत्रफलं
धूपेगंधदानेचतच्छृणु॥ भूमिदानेनतत्तुल्यं

गन्धदानफलंस्मृतम्॥संमार्जनेपंचशतंस
हस्त्रमनुलेपने॥माल्येवातत्सहस्त्रंतुअनं
तंगीतवादनइत्यादि॥दशसुवर्णदानजन्यं
फलम्॥एकपुष्पसमर्पणाद्भवति॥धूपेग्नि
होत्रजन्यम् गंधेभूमिदानजन्यम् संमार्ज
नेगोपंचशतीदानजन्यम्॥अनुलेपनेसह
स्त्रगोदानजन्यम्॥ मालायांगोलक्षदानज
न्यम्॥गीतेवाद्येचानन्तगोदानजंफलंभवती
त्यर्थः॥ लैंगे॥काशीप्रकर्णे॥ दशानामश्वमे
धानांयज्ञानांवातुयत्फलम्॥तदवाप्नोतिध
र्मात्मास्नात्वातत्रवरानने॥स्वल्पमप्यत्रयो
दद्यात्ब्राह्मणेवेदपारगे॥शुभांगतिमवाप्नो
तिअग्निवच्चैवदीप्यते॥उपवासंतुयःकृत्वा
विप्रान्संतर्पयेद्द्विजः॥ससौत्रामणियज्ञस्यफ
लंप्राप्नोतिनिश्चितमित्यादि॥अथकालविशे
षअनेकतीर्थागमः॥लिंगपुराणे॥अष्टम्यां
चचतुर्दश्यांपक्षयोरुभयोरपि॥शशिभानूप
रागेषुकार्त्तिक्यांचविशेषतः॥सर्वपर्वसुपुः
ण्येषुविषुवेष्वयनेषुच॥पृथिव्याःसर्वतीर्था
निवाराणस्यांतुजान्हवीम्॥उत्तरप्रवहांपुः
ण्यांममभौलिविनिर्गताम्॥पितुस्तेगिरिराज
स्यसुतांहिमवतःशुभाम्॥भजन्तेसर्वतोभीत्य

तान्शृणुष्ववरानने॥सन्निहत्यकुरुक्षेत्रंसार्द्धं तीर्थशतैःशतैः॥नैमिषंपुष्करंचैवप्रयागंचपृथूदकम्॥संध्यासमयश्चैवसर्वानद्यसरांसि चसमुद्राःसप्तचैवात्रदेवतीर्थानिकृत्स्नशः॥भागीरथींसमेष्यंतिसर्वपर्वसुकाशिकामिति॥ अथमत्स्योदरीयोगः॥काशीखण्डे॥कैलासाद्रेःसमायातासप्तकोटिमितागणाः॥तत्रतीर्थं महाख्यातंमिलितंगांगवारिभिः॥यथासंहार मार्गेणगंगाम्भःप्रविशेदिह॥तदामत्स्योदरी तीर्थंलभ्यतेपुण्यगौरवात्॥सूर्याचंद्रमसोः पर्वतदाकोटिशतंगुणम्॥पूर्वपर्वाणितत्रैव सर्वतीर्थानितत्रवै॥तत्रैवसर्वलिंगानिगंगाम त्स्योदरीयतः॥मत्स्योदर्यांहियेस्नातायत्रकुत्रहिमानवाः॥कृतपिण्डप्रदानास्तेनमातुरुदरासया इति॥अथकाश्यांगंगामहिमा॥त्रैलोक्येयानितीर्थानिमोक्षदानिचकृत्स्नशः॥सेवंतेसततंकाश्यांगंगामुत्तरवाहिनीम्॥तथा॥ गंगाहिसर्वतःपुण्याब्रह्महत्यापहारिणी॥अ थावश्यपूज्यदेवाः॥तत्रब्रह्मवैवर्ते॥अवश्य पूज्यंवददेववृंदंपृच्छामिनिर्विघ्ननिवासकाम इति॥शिष्येणपृष्टे॥गुरुरुवाच॥येकाश्यां निवसंतिशंकरहरिष्वा राधनास्तत्परास्तेषां

पापचयोपियातिविलयं मुक्तिंलभंतेपिच॥ये
काश्यांभवनाशिनींभगवतीं श्रीमद्भवानींज
नाः॥सेवंतेसततंसपूजनपरिक्रामादिभिस्ते
स्थिराः॥परिक्रामःप्रदक्षिणा॥सर्वेषांविघ्नहर्तॄ
णांकर्तॄणामपिसेश्वरी॥अतोभवान्यधीनंहीः
क्षेत्रंपूज्याततःपरा॥येकाश्यांप्रभजंतिढुंढिग
णपंसर्वाघविघ्नापहम्॥तेषांढुंढिसमस्तशा
स्त्रविहितान्लोकान्प्रयच्छत्यसौ॥येनाना
विधमोदकैःसुमधुरैर्विप्रान्सुपूज्यादरात॥
स्तुलामोदकदास्तएवसुधनाःकाश्यामवश्यं
जनाः॥ढुंढिराजःप्रियःपुत्रोभवान्याःशंकर
स्यच॥तस्यपूजनमात्रेणत्रयोपिवरदाःसदा
॥गणेशःसर्वदेवानामादौपूज्यःसएवहि॥स
र्वैरपिमहाविघ्ननाशकोन्यत्रकिंत्विह॥येका
लराजंकलिराजभीषणम्॥ध्याराधयंतेवट
काज्यभक्तैःभजंतिकाश्यामपवर्गहेतोस्तएव
काश्यामपवर्गभाजःपापानिसर्वाणिविनाश
यत्यलम्॥मनःप्रशुद्धिंप्रकरोतियेनभजंत्य
जस्रंशिवनीशितारम् येदंडपाणिंद्विजभोज
नाद्यैर्भजंतिकाश्यांसुखवासहेतोः॥तेविघ्नभू
गान्परिहृत्यदूरादारात्सदंशाश्वतमाप्नुवन्ति॥
लिंगपुराणे॥अतःपरंप्रवक्ष्यामिचंडिकाःक्षेत्र

संज्ञिकाः॥ दक्षिणे रक्षते दुर्गा उत्तरे शी च नैर्ऋते॥ अङ्गारेशीपश्चिमे च वायव्ये भद्रकालिका॥ उत्तरे भीष्मचंडी च महागुह्या तथैशातः॥ ऊर्ध्वकेशी समायुक्ता शांकरी पूर्वतः स्मृता॥ ऊर्ध्वकेशी तथाग्नेये चित्रघंटा च मध्यतः॥ एतास्तु चण्डिका देवियो त्र द्रक्ष्यति मानवः॥ तस्य तुष्टाश्च ताः सर्वाः क्षेत्रं रक्षंति तत्सराः॥ विघ्नं कुर्वन्ति सततं देवि वाराणसीं शुभामित्यादि॥ इति काशीप्रकरणे नानातीर्थनानादेवताकथनम्॥ अथ नित्ययात्रा ब्रह्मवैवर्त्ते ऋषिप्रश्नः॥ नित्ययात्राविधानं तु वक्तुमर्हसि सत्तम॥ यथा क्षेत्रकृतं पापं नित्यमेव प्रणश्यति॥ श्रीभगवानुवाच॥ प्रातः प्रातस्समुत्थाय ढुंढिराजं नमेत्सुनः॥ भवानीं शंकरं पश्चात्कालभैरवमेव च॥ दण्डपाणिं गणेशं तु केशवादित्यचंडिकाः॥ ततः शौचादिकं कृत्वा दन्तधावनपूर्वकम्॥ स्नानमुत्तरवाहिन्यां श्रुत्यादिषु यथोदितम्॥ ततः सन्ध्या तर्पणादि विधाय स्वाधिकारतः॥ विश्वेश्वरं स्मरन् गच्छेत्पूजासाधनसंयुतः॥ आदौ देव्या मंडपं संप्रविश्य तत्र स्थित्वा पूजयेद्दै भवानीं सांगोपांगामागमोक्तैर्विधानैस्तुत्वा नत्वा प्रार्थयेदन्नदात्रीम्॥ सर्वेषां विघ्नहर्तॄणां कर्मणामपि सेश्वरी॥ अतो

भवान्यधीनं हि क्षेत्र पूज्यात ततः परे इत्यादि ॥ अथ वाराणस्यां मरणे मुक्तिप्रतिपादकवाक्यानि ॥ तथा हि ॥ प्रयागे वपनं कुर्याद्गयायां पिण्डपातनम् ॥ दानं दद्यात्कुरुक्षेत्रे वाराणस्यां तनुं त्यजेत् ॥ ब्रह्मपुराणे ॥ नैमिषे च कुरुक्षेत्रे गङ्गाद्वारे च पुष्करे ॥ स्नानात्संसेवनाद्वापि न मोक्षः प्राप्यते नरैः ॥ इह संप्राप्यते येन तत एतद्विशिष्यते ॥ प्रयागे वा भवेत् मोक्षो महाकाले ऽथवा श्रिये ॥ कालंजरे महाभागे इह वा मत्परिग्रहात् ॥ प्रयागादपि तीर्थाग्र्यादिदमेव महत्फलम् ॥ अनायासेन चैवात्र मोक्षप्राप्तिः प्रजापते ॥ मात्स्येपि ॥ एक एव प्रभावोस्ति क्षेत्रस्य परमेश्वरि ॥ एकेन जन्मना देवि मोक्षं प्राप्स्यत्यनुत्तमम् ॥ स्कान्दे ॥ अविमुक्तमुपक्रम्य ॥ कृत्वा पापसहस्राणि पिशाचत्वं वरं नृणाम् ॥ अविशक्र समं राज्यं न तु वाराणसीं विना ॥ तस्मात्संसेवनीयं हि अविमुक्तं विमुक्तये महाभारते ॥ दर्शनाद्देवदेवस्य मुच्यते ब्रह्महत्यया ॥ प्राणानुत्सृज्य तत्रैव मोक्षं प्राप्नोति मानवः ॥ स्कान्दे ॥ अन्यानि तु पवित्राणि काशीप्राप्तिकराणि वै ॥ काशीं प्राप्य विमुच्यन्ते नान्यथा कल्पकोटिभिरिति ॥ ब्रह्मज्ञानेन मुच्यन्ते प्रयागमरणेन वेत्यादि ॥ एतावता काशीप्र

योगयोस्साक्षान्मोक्षप्रदायकत्वंसिध्यति॥ तयोरप्येतावान्विशेषः सिताऽसितइतिश्रुत्यात्रैवतत्कामनयाचैवमुक्तिरिति॥ परञ्चाश्यांविशेषः॥ अविमुक्तमात्रेइच्छयाऽनिच्छयाचाश्रुत्यजांमुक्तिरिति॥ नचज्ञानादेवकैवल्यमिति॥ श्रुत्याज्ञानमंतराकथंमुक्तिरितिवाच्यम्॥ काश्यामपितारकोपदेशस्यज्ञानजनकत्वात्॥ तदुक्तंकाशीखण्डे॥ ब्रह्मज्ञानेनमुच्यन्तेनान्यथाजन्तवः क्वचित्॥ ब्रह्मज्ञानंतदेवाहःकाशीसंस्थितिभागिनाम्॥ दिशामितारकंत्रांतेमुच्यन्तेतेतुतत्क्षणात्॥ सनत्कुमारसंहितायाम्॥ पुण्यानिपापान्यखिलान्यशेषंसार्थंसबीजंसशरीरमार्ये॥ इहैवसंहृत्यददामिबोधंयतःशिवानन्दमवाप्नुवन्ति॥ पाद्मेपि॥ तीर्थान्तराणिक्षेत्राणिविष्णुभक्तिश्चनारद॥ अन्तःकरणसंशुद्धिंजनयंतिनसंशयः॥ स्थान्तरेमूत्रपुरीषमध्येचंडालवेश्मन्यथवाश्मशाने॥ कृतप्रयत्नोप्यकृतप्रयत्नोइहावसानेलभतेवमोक्षमितिसनत्कुमारसंहितायाम् पाद्मे॥ भूमौजलेंतरिक्षेवायत्रक्वापिमृतोद्विजः॥ ब्रह्मैकत्वञ्चप्राप्नोतिकाशीशक्तिरुपाहिता कौमें॥ यत्रसाक्षान्महादेवोदेहान्तेस्वयमीश्वरः

॥आ चष्टे तारकं ब्रह्म तदेव अतिमुक्तिदम्॥ तारकं च प्रणवः तदुक्तं काशीखण्डे॥ नवर्ण्यते कैःकिल काशिके यं जंतोः स्थितस्यात्र यतो न्तकाले॥ विमुक्तये प्राक्तन पुण्यभारैरोंकारमोंकारयतीन्दुमौलिः॥ ओंकारयति अङ्गीकारयति ग्राहयति॥ तथा॥ अनिलो मृगनाभिरेणुगन्धैरधिकाशि प्रणवोपदेशकाले हरते मरणश्रमं नराणां हरवामार्द्धकुचोत्तरीयजन्मा॥ अन्यत्रापि प्रणवं तारकं ब्रूते काश्यां देवो महेश्वर इति॥ अथ तेषां पुराणवाक्यानां मूलभूताः श्रुतयो प्युच्यन्ते॥ तत्र जाबालोपनिषदि अथैनमत्रिः पप्रच्छ याज्ञवल्क्यम्॥ य एषोऽव्यक्तोऽनन्त आत्मा तं कथं विजानीयामिति॥ स होवाच॥ याज्ञवल्क्यः॥ सोऽविमुक्त उपास्यो य एषोऽनंतोऽव्यक्त आत्मा सोऽविमुक्ते प्रतिष्ठित इति॥ सोऽविमुक्तः कस्मिन्प्रतिष्ठित इति वर्णायां नास्यां च मध्ये प्रतिष्ठित इति का वै वर्णा का च नासीति सर्वानिन्द्रियदोषान्वारयतिते न वरणेति सर्वाणीन्द्रियकृतान्यायान्नासयति तेन नासीति॥ तथा तत्रैव अविमुक्तो वै देवानां देवयजनं सर्वेषां भूतानां ब्रह्मसदनं अत्र हि जंतोः प्राणेषूत्क्रममाणेषु रुद्रस्तारकं ब्रह्म व्याचष्टे येनाऽमृती भूत्वा मोक्षी भ-

वतितस्माद्विमुक्तमेवनिषेवतावितमुक्तंनवि
मुंचेदेवमेवैतद्याज्ञवल्क्येतिरामतापनीयोप्य
निषद्यपि॥श्रीरामचंद्रस्यमनुंजजापवृषभध्व
जः॥मन्वन्तरसहस्रैस्तुजपहोमार्चनादिभिः।
ततःप्रसन्नोभगवान्श्रीरामःप्राहशंकरम्॥
वृणीष्वयदभीष्टंतेदास्यामिपरमेश्वरेति॥सहो
वाच॥मणिकर्ण्यांममक्षेत्रेगंगायांचांतरेपु
नः॥म्रियतेदेहितज्जंतोर्मुक्तिर्नोतोवरांतरमि
ति॥अथसहोवाचश्रीरामः॥क्षेत्रेत्रतवदेवेश
यत्रकुत्रापिवामृताः॥कृमिकीटादयोप्यत्र
मुक्ताःसन्तुनचान्यथा॥अविमुक्तेतवक्षेत्रे
सर्वेषांमुक्तिसिद्धये॥अहंसन्निहितस्तत्रपा
षाणप्रतिमादिषु॥क्षेत्रेस्मिन्योर्चयेद्भक्त्यामं
त्रेणानेनमांशिव॥ब्रह्महत्यादिपापेभ्योमो
क्षयिष्यामिमाशुचः॥मुमूर्षोर्दक्षिणेकर्णेय
स्यकस्यापिवास्वयम्॥उपदेक्ष्यसिमन्मन्त्रं
समुक्तोभविताशिवेति अन्यत्रापि॥सुनमः
ष्ट्राव्यचरत्कपर्दईवरत्रायांदार्वानह्यमानः॥
नृम्णानिकृण्वन्बहवेजनायगाः॥पस्यशान
स्तविषीरधत कपर्दःईरुद्रःप्रवृत्तोदशदश
वाणवान्वरत्रायांज्यायांदारुवंशकास्मयन्ध
नुः आनह्यमानः आवध्नन्मुनंलोकानांकल्य

णं काम क्रोधादि शत्रु निवारणेन अचरत् करोति स्म॥ तथा नृम्णानि शम दमादि बलानि वहद्वे जनय काशीस्थ जन्तुमात्राय तूष्णवन् कुर्वन् गाः वाचः तारकरूपा पस्य शानः ग्राहयन् व्याचक्षाणः॥ तविषीर्बलानि ज्ञानैश्वर्यादीन् अधत्त तस्मिन्नेव जने॥ इति चेति॥ उद्ध्राहृदम पिबज्जर्हृषाणः कूटं स्म तृंहृद भिमातिमेति प्रमुष्कभारश्रवइ च्छमाणो जिरं बाहू अभरत्सिषासन् योऽगस्त्यः जर्हृषाणः अतिहृष्यन् उद्रः उदकस्य हृदं समुद्रं अपिबत् पीतवान् तत्र हेतुः प्रमुष्कभार इति प्रमुष्कः भारो येन अगस्त्येन समुद्रे पीते निराश्रया दैत्याः सुखं वध्या भविष्यन्तीति यथा कूटं कूटवन्तं शृंगिणं विंध्यं त्रिंहत् हिंसन् अभिमातिं सर्वतः पीडां एति प्राप्नोति तत्र हेतुः श्रवइच्छमानः बाहू अभरदिति देहान्ते रुद्रस्तारकं ब्रह्म व्याचष्टे इति श्रुतेर्देहान्ते रुद्रस्तारकश्रवणमिच्छन्॥ ऊर्ध्वबाहुर्भूत्वा काशीं न त्यक्ष्यामीति प्रतिज्ञां कृतवानित्यर्थः॥ अतस्तद्भृद्धादभिमातिमेति॥ किं तारकश्रवणेनेत्यत आह अजिरं शिषासन्निति॥ तत्त्वज्ञानं विना न जीर्यतीत्यजिरः संसारः तं शिषासन्नं तं गमयितुमिच्छन्निति ऋग्वेदसंहितोक्ता एवं वस्यः श्रुतयो

मोक्षप्रतिपादिकाःकाश्याम्मरणेइत्यन्यत्रवि
स्तरः॥ ॥ अथकाश्यांमृतानांपापिनांजंतू
नांभैरवीयातनाप्रसूयते॥ साचान्यत्रकृतपा
पानांकाशीकृतपापानांवातत्रापिमृतेरुद्रपै
शाचशरीरेसुमूर्षुशरीरेवेतिचत्वारः प्रश्ना
भवन्तितत्रननतावदाद्यः॥ अन्यत्रकृतपापा
नांकाशीस्मरणदर्शननिवासादिनात्तच्छुद्धि
रित्युक्तेस्तथाचपाद्मे॥ अत्रप्रविष्टमात्रस्यज
न्तोः॥ पापंपुरार्जितम्॥ विनाशमाप्नोतिपरं
पुण्यराशिश्चवर्द्धते॥ इतिमत्स्यपुराणेवारा
णसीतिभुवनत्रयसारभूताधन्यासदाममं
पुरीगिरिराजपुत्रि॥ अत्रागताविविधदुःकृत
कारिणोपि॥ पापक्षयाद्विरजसःप्रतिभान्ति
मर्त्याः॥ इत्यादिवाक्यादिति नद्वितीयोऽपिका
श्याऊखरभूमित्वेन तत्रकृतानामपिकर्म्मणां
फलजनकत्वाभावात्॥ तथापद्मपुराणेपा
तालखण्डेमाण्डव्यवाक्यम्॥ तत्र पापकृन्म्रि
यतेकाश्यांयदिप्राकृपुण्यगौरवात्॥ नजातु
नरकंयातिकाकथाधर्मतत्परः॥ तथाकाशीख
ण्डे॥ अघोरवरःपुण्यपापानांधन्यावाराणसी
पुरीतिनांकूरयंतिहरदृग्ज्वलितानितेषांमिति
तेषांकाशीवासिनांजनानांकर्म्माणिपुण्यानिपा

पानिचनांकुर्यंतिफलानिदातुंन संमुखी
भवन्तितत्रहेतुःयतोहरस्यदृग्भिर्ज्वलिताानि
भस्मीकृतानितेषांकर्म्मणांसद्भावाभावा
दितिभावः॥नतावत्तृतीयःप्राणेषूत्क्रममाणे
षुरुद्रस्तारकम्ब्रह्मव्याचष्टेइतिवर्त्तमानशान
चाप्राणोत्क्रमणकालएवतदुपदेशेनोपदेश
स्याव्यवहितोत्तरंज्ञानोत्सत्याज्ञानाग्निस्सर्वक
र्म्माणिभस्मसात्कुरुतेऽर्जुनेत्युक्तयाज्ञानाग्नौजा
यमानेसतिपूर्वोपार्जितशुभाशुभकर्मणांनाशे
नशिवत्वंप्राप्तेरुद्रपिशाचत्वासम्भवात्॥नच
तदानींज्ञानन्नोत्पद्यतामितिवाच्यम्॥कारण
सामग्रीसमवधानदशायांकार्य्यासत्वेमानाभा
वात्॥उपदेशएवनेतिचेतश्रुतौशानजप्रयोग
स्यपूर्वोक्तोरवरत्वस्यचानुपपत्तेस्तस्मादुपदे
शतज्जन्यज्ञानयोश्चसतोश्श्रुत्यर्थोपपत्तौन
द्विपरीतस्यस्मृतिबोधितस्यापिकल्पनमयुक्त
मेवस्यादिति॥अथचतुर्थोयथाकथंचित्सम्भ
वतितथा॥ब्रह्महत्यादिपापानियस्यानाम्नो
पिकीर्त्तनात्॥त्यजंतिपापिनंकाशीसाकेनेह्यो
पमीयते॥एतस्यश्रवणादेवपापसंघातमंदि
रम्॥सद्योविलयमायातितूलमग्नाविवाहित
मित्युक्त्याकाश्यांस्थितानामपिजन्मान्तरोपार्जि

तपापानांकाशीदर्शनस्नानादिनाप्युपक्षयात्
॥ कथमाधिव्याधिज नितदुःखानिसम्भाव्येर
निति॥ तस्मादेतच्छरीरेणैवोपभुज्यन्तइत्युपप
न्नश्चतुर्थः यानितुभैरवीयातनाप्रतिपादका
निकाश्यांमृतानांजन्तूनांदैवात्सापकृतामपि
नपातोनरकेतेषांतेषांशास्ताहमेवयत् ॥ अंत
र्गेहकृतंपापंपैशाच्यनरकावहम् ॥ अहोरुद्र
पिशाचत्वंनरकेभ्यो ऽपिदुःसहम् ॥ अयंहिसकुल
स्तम्भोयत्रश्रीकालभैरवः ॥ क्षेत्रपापकृतःशा
स्तिदर्शयंस्तीव्रयातनामित्यादीनिकाशीख
ण्डोक्तानियातनाबोधकानि॥ तानिचपूर्वोक्त
युक्त्यामृतेतदभावात् भाविनोवाराणसीमर
णस्यात्रान्यत्रचेतितात्त्विकाभावेनात्रक्षेत्रेव
सतांपापरतिप्रतिप्रसवभूतानि निवासिन्येव
शरीरे अत्युग्रपुण्यपापानामिहैवफलमश्नु
ते॥ त्रिभिर्वर्षैस्त्रिभिर्मासैस्त्रिभिः पक्षैस्त्रिभिर्दि
नैरितिबोधितकल्मषोपभोगनिवर्त्तकानीति
काश्यांमरणान्मुक्तिरित्यभिमानप्रयुक्तनित्य
नैमित्तिककर्मत्यागजनितानर्थसम्भावनानि
वृत्तिपराणिवेतियथाचसांख्यप्रवचनपरिशि
ष्टेज्ञानंहिकर्म्मणोद्दीपितंसदेवमुक्तेःकारणं
छेदनेष डुधारायाइवअतएवजातेपिज्ञाने

स्वीयं कर्म्म न त्यजेदनर्थसंभावनया तथा च व्यासवाक्यम्॥ ज्ञानिनामपि चेतांसि देवी भगवती हि सा बलादाकृष्य मोहाय महामाया प्रयच्छतीति॥ मनुरपि मात्रा स्वस्रा दुहित्रा वा न विविक्तासनो भवेद्बलवानिन्द्रियग्रामो विद्वांसमपि कर्षतीत्याहेति वदितिशिवम्॥ ❋॥ इति श्रीमन्महाराजाधिराजमहाराजश्रीरामवंशजश्रीमन्महाराजमाधवसिंहकारिते तीर्थसुधानिधौ काशीतरंगः॥ ❋॥ अथ कांचीमाहात्म्यम्॥ तत्र निवासफलम्॥ पाद्मे॥ लक्ष्मीकांतः स्वयं साक्षाज्जंतूंस्तत्र निवासिनः॥ श्रीकान्तानेव कुरुते परत्रेह च निश्चितम्॥ दृष्ट्वा कांचीं कांतिमतीं कांतिमद्भिर्निषेविताम्॥ कांतिमान भवत्सोपि ना कांतिस्तत्र कस्यचित्॥ अथ तत्र कृत्यमहिमा॥ तत्र कृत्यं च यत्कृत्यं तत्कृत्वा सर्वकृत्यवित्॥ अथ तत्र सामान्यतो महिमा स्कान्दे॥ वरदो भगवान्यत्र रमया सहितः प्रभुः वरदाने समर्थोस्ति सापि केनोपमीयते॥ लक्ष्मीः कान्तिस्वरूपा च कामदो भगवान्हरिः॥ विष्णुरुद्रमहेशाद्यैस्तु ता केनोपमीयते॥ अथ शिवकांची॥ एकाम्रेश्वरो देवः सर्वान् कामान्प्रयच्छति॥ तं दृष्ट्वा सर्वतीर्थेषु स्नात्वा

पापात्प्रमुच्यते॥ किंफलंबहुनोक्तेनराजन्स
प्तपुरीष्वपिए काकांचीसमोष्याचेत्तत्रमुक्तिर्न
संशयः॥ मुक्तोसर्वाणितीर्थानिप्रवदन्तिमनी
षिणः॥ तथापिकांचिकातीर्थंसर्वतीर्थाद्विशि
ष्यते॥ अथकामाख्यामहिमा॥ कामाख्याभ
गवतीयत्रसाक्षात्स्वयम्वरा॥ तस्यादर्शनमा
त्रेणनरोकामैर्नबाध्यते॥ तत्रपूजाजपोहोमः
स्वाध्यायःसफलोभवेत्॥ कामाख्यायाःप्रसा
देनसरोवरविशुद्धिना॥ अथतत्रत्यसर्वतीर्थ
मयसरोवरमहिमा॥ सर्वतीर्थजलंपीत्वादि
व्यंज्ञानमवाप्नुयात्॥ तत्राभिषेकंयःकुर्य्या
त्सर्वपापैःप्रमुच्यते॥ तत्रश्राद्धविधानेनश्रा
द्धंकुर्य्याद्विचक्षणः॥ गमिष्यंत्यक्षयान्लोका
न्पितरस्तस्यतत्क्षणादित्यादि॥ ❋ ॥ इतिश्री
मन्महाराजाधिराजमहाराजश्रीरामवंशजश्री
मन्महाराजमाधवसिंहकारितेतीर्थसुधानि
धौकांचीतरंगः॥ ॥ अथावंतिकामाहा
त्म्यन्तत्रादौतच्छब्दार्थोमहाकालशब्दार्थश्च
स्कान्दे कल्पेकल्पेखिलंविश्वंकल्पयेद्यःस्वली
लया॥ तंकालंकालयित्वायोमहाकालोभवे
त्किल॥ पापादवन्तिसाविश्वमवंतीतिनिगद्य
ते॥ युगेयुगेन्यनाम्नीचकलाउज्जयनीतिच॥

अथतत्रमृतशरीरेनपूतिगन्धः॥ विपन्नोय
त्रवैजन्तुः प्राप्यापिशवतांस्फुटम्॥ नपूतिगंध
माप्नोतिसमुच्छ्रायतिनक्वचित्॥ अथतत्रको
टिसंख्यकलिंगानि स्कान्दे॥ यमदूतानयस्यां
हिप्रविशन्तिकदाचन॥ परःकोटीतिलिंगानि
तस्यांसंतिपदेपदे॥ अथतत्तत्रीणिमहालिंगा
नि॥ हाटकेशोमहाकालस्तारकेशस्तथैवच॥
एकंलिंगंत्रिधाभूत्वात्रिलोक्यांव्याप्यसंस्थित
म्॥ ज्योतिःसिद्धवटेज्योतिस्तेपश्यंतीहयेद्वि
जाः॥ अथवाश्रीमहाकालद्रष्टारःपुण्यराश
यइति॥ अथमहाकालदर्शनमहिमा॥ महा
कालस्यतल्लिंगंयैर्दृष्टंदृष्टिभिःक्वचित्॥ नस्पृष्टा
स्तेमहापापैर्नदृष्टास्तेयमोद्भटैः॥ महाकालंयताः
कामैःस्पृष्टाःपृष्टेस्तुरेगमाः॥ महाभारते॥ महाका
लंततोगच्छेन्नियतोनियताशनः॥ कोटितीर्थमु
पस्पृश्यहयमेधफलंलभेत्॥ महाकालमहाका
लमहाकालेतिसंजपन्॥ स्मरतःस्मरतोनित्यं
स्मरकर्त्तृस्मरान्तकाविति स्मरणमहिमा॥ तत्रा
प्यनेकानितीर्थानितत्रत्याश्चानेकेदेवाःसंती
तत्रतएवावगंतव्याइतिशिवम्॥ ॐ॥ श्रीम
न्महाराजाधिराजमहाराजश्रीरामवंशजश्रीम
न्महाराजमाधवसिंहकारितेतीर्थसुधानिधौ

अवन्तिकातरंगःसमाप्तः ॥ ❋ ॥ अथद्वारावती
माहात्म्यम् ॥ तत्रसाकल्येनसर्वासांपुरीणांमु
क्तिप्रदायकत्वंपूर्वोक्तश्रुत्यालभ्यते ॥ अतोवि
शेषव्यक्तिमुपाद्ययतदभावेऽपिमुक्तिप्रदायक
त्वंसिद्ध्यति ॥ द्वारावत्यन्तर्गततीर्थानितत्रादौ
गोमतीमाहात्म्यम् ॥ स्कान्दे ॥ प्रल्हादउवाच ॥
ततोगच्छतद्विजश्रेष्ठागोमतींकृष्णसंश्रयाम्
॥ यस्यादर्शनमात्रेणमुच्यतेसर्वपातकैः ॥ दु
रितौघक्षयकरममंगलविनाशनम् ॥ सर्वका
मप्रदंपुंसांप्रणमेद्गोमतीजलम् ॥ महापाप
क्षयकरमगतीनांगतिप्रदम् ॥ पूर्वपुण्यवशा
ल्लभ्यंसुशीतंगोमतीजलम् ॥ अथकृष्णदेव
प्रासादर्शनफलम् ॥ प्रासादंकृष्णदेवस्ययःप
श्यतिनरोत्तमः ॥ दूराद्धेममयंदृष्ट्वाकलशंध्व
जसंयुतम् ॥ कृमिकीटपतंगानिहताश्चपथि
गच्छताम् ॥ परान्नपरपानीयमस्पृश्येनचसं
गमः ॥ तत्सर्वंनाशमायातिभगवत्क्षेत्रदर्शनात्
॥ अथगोमत्युदधिसंगममाहात्म्यम् ॥ माग
च्छतसुरनदींकालिंदींमासरस्वतीम् ॥ यातत्तत्र
द्विजश्रेष्ठागोमत्युदधिसंगमे ॥ हेलयाप्राप्यते
यत्रसर्वान्कामान्नसंशयः ॥ गोमतीजलकल्लो
लेक्रीडतेयत्रसागरः ॥ पापघ्नंगोमतीनीरंप्रा

प्यते यत्र तत्र च ॥ सागरेण तु संमिश्रं महापातकनाशनम् ॥ गोमतीसङ्गता यत्र सागरेण द्विजोत्तमाः ॥ श्राद्धं हि पितृपक्षान्ते कार्य्यं गोमतिसंगमे ॥ श्रद्धाहीनं मंत्रहीनं पात्रहीनमथापि वा ॥ द्रव्यहीनं कालहीनं मनसः स्वास्थ्यवर्जितम् ॥ श्राद्धं पक्षे लमावस्यां गोमत्युदधिसंगमे ॥ परिपूर्णं भवेत्तस्य पितॄणां तृप्तिरक्षया ॥ गोमती कमला चैव चन्द्रभागा तथैव च ॥ त्रयस्ताः संगता नद्यः प्रविष्टा वरुणालयम् ॥ गयायां पिण्डदानेन प्रयागे ह्यस्थिपातनात् ॥ तत्पुण्यं समवाप्नोति पक्षान्त श्राद्धकृन्नरः ॥ यदीच्छेत्सर्वतीर्थेषु हेलया योभिषेचनम् ॥ स्नानं कुर्वीत भक्त्या वै गोमत्युदधिसंगमे ॥ तस्मात्सर्वप्रयत्नेन श्राद्धं तत्रैव कारयेत् ॥ अपुत्रा चैव या नारी स्नानं कुर्यात्प्रयत्नतः ॥ मृतपुत्रास्तथा विम्बा काकवंध्या च या भवेत् ॥ दोषैः प्रमुच्यते सर्वैः गोमत्युदधिसंगमे ॥ अथ रुक्मलासतीर्थमाहात्म्यम् ॥ स्कान्दे ॥ ऋषीन्प्रति प्रल्हादवाक्यम् ॥ तत्र गत्वा द्विजश्रेष्ठा अर्घ्यं दद्याद्द्विजन्मनः ॥ संतर्पयेत्पितॄन्देवान्मनुष्यांश्च यथाक्रमम् ॥ ततः श्राद्धं प्रकुर्वीत पितॄणां श्रद्धयान्वितः ॥ विप्रेभ्यो दक्षिणां दद्याद्भोजनं यच्च शक्तितः ॥ विशेषतः प्रदातव्या सव

त्सागौरलंकृता॥सज्यांसोपकरांदद्यात्तविष्णु-
र्मेप्रीयतामिति।दीनान्धकृपणानांचसदातत्ती
र्थवासिनाम्॥दद्याद्धनंस्वशक्त्याचवित्तशाठ्य
विवर्जितम्॥पितृणांश्राद्धदानेनतद्योनिंया-
तिमानवः॥अथतत्रत्यगोप्रचारतीर्थफलम्
स्कान्दे।प्रल्हादवाक्यम्॥तातगच्छद्विजश्रे
ष्ठागोप्रचारमतःपरम्॥यत्रस्नातोनरोभक्त्या
लभेद्गोदानजंफलम्॥यत्रस्नातोजगन्नाथोन
मस्योदेवतावृत्तः॥करिदानञ्चतत्रोक्तंद्वाद
श्यांद्विजसत्तमाः॥अथगोमतीमाहात्म्यम्॥
किमग्निहोत्रैःकिंयज्ञैःदानैर्नानाविधैःकलौ॥
गत्वामधुपुरींपश्यन्मुखंकृष्णस्यपापहम्
किंवेदैःकिंपुराणैश्चशास्त्रैर्मन्वादिसम्भवैः॥
पश्यतोगच्छतोराजन्पुरींद्वारावतींकलौ॥
तावद्गर्जन्तितीर्थानिआसमुद्रसरांसिच॥याव
त्कृष्णांघ्रिसंभूतादृश्यतेनहिगोमती॥प्रया
गमरणान्मुक्तिःमुक्तिःकाश्यांतथैवच॥द्वारका
कृष्णसान्निध्यात्स्नानमात्रेणगोमती॥अथच
क्रतीर्थमाहात्म्यम्॥चक्रतीर्थंतुयोगच्छेत्प्रसं
गेनापिमानवः॥कुलैकविंशतिस्तस्यसोपिग-
च्छतितत्पदम्॥लोभेनाप्युपरोधेनदंभेनकप
टेनवा॥चक्रतीर्थंतुयोगच्छेत्तनपुनर्विशतेभ

वम्॥ प्रयागेह्यस्थिपातेन यत्फलं परिकीर्त्तितम्॥ तद्देवशतसाहस्रं चक्रतीर्थेस्थिपातनात्॥ पृथिव्यामपि तत्तीर्थं परमं परिकीर्त्तितम्॥ चक्रतीर्थमिति ख्यातं ब्रह्महत्यादिनाशनम्॥ श्रवणद्वादश्यां गोमत्युदधिस्नानफलम्॥ पाद्मे पातालखंडे॥ श्रवणद्वादशीयोगे गोमत्युदधिसंगमे॥ स्नात्वा कृष्णमुखं वीक्ष्य लिप्यते नैन सा क्वचित्॥ अथ द्वादशीमात्रफलम्॥ यस्य कस्यापि मासस्य द्वादशीं प्राप्य मानवः॥ कृष्णक्रीडापुरीं वीक्ष्य मुक्तः संसारपातकात्॥ कृष्णस्य दर्शनं रात्रौ ये च कुर्वन्ति जागरम्॥ द्वादश्यां माधवे मासि धन्यास्ते मानवाः कलौ॥ अथ पञ्चामृतस्नानफलम्॥ पञ्चामृतेन ये स्नानं कारयन्ति महासुराः॥ द्वादश्यां लोकनाथस्य नास्ति तेषां पुनर्भव इति॥ अद्यापि द्वारकायामाश्चर्यदर्शनम्॥ महाभारते वनेपर्वणि॥ ततो द्वारावतीं गच्छेन्नियतो नियताशनः॥ पिण्डारके नरः स्नात्वा लभेद्बहुसुवर्णकम्॥ तस्मिंस्तीर्थे महाभाग पद्मलक्षणलक्षिताः॥ अद्यापि मुद्रा दृश्यन्ते तदद्भुतमिदं म॥ त्रिशूलाङ्कानि पद्मानि दृश्यन्ते कुरुनन्दन॥ महादेवस्य सान्निध्यं तत्र वै भरतर्षभेति॥ अत्र त्यमहात्म्यबोध

कवाक्येषुमोक्षपदस्यापिबहुषुफलान्तरप्र
तिपादकवाक्यानमृतेतदनुक्तेश्चतल्लोक
प्राप्तिप्रतिपादकत्वमेववास्वल्पेनापिकर्म्मणा
तद्भवतीतिकल्प्यमितिशिवम्॥*॥ इति
श्रीमन्महाराजाधिराजमहाराजरामवंशज
श्रीमन्माधवसिंहकारितेतीर्थसुधानिधौह्ला
रावतीतरङ्गः॥*॥अथसामान्यतःप्रया
गमाहात्म्यम्॥काशीखण्डे॥प्रयागमगमद्वि
प्रस्तीर्थराजंसुहृष्टवत्॥सितासितेसरिच्छे
ष्ठेयत्रास्तांसुरदुर्लभे॥यत्राप्लुतोनरःपापःप
रंब्रह्माधिगच्छति॥क्षेत्रंप्रजापतेःपुण्यंसर्वे
षामेवदुर्ल्लभम्॥लभ्यतेपुण्यसंभारैर्नान्यथा
र्थस्यराशिभिः॥प्रकृष्टंसर्वयागेभ्यःप्रयागमि
तिगीयते॥यज्वनांपुनरावृत्तिर्नप्रयागार्द्रवर्ष्म
णाम्॥यत्रःस्थितःशिवःसाक्षाच्छूलटंकोमहे
श्वरः॥तत्राप्लुतानांजंतूनांमोक्षवर्त्मोपदेश
कः॥तत्राक्षयवटोयोस्तिससपातालमूलवा
न्॥प्रलयेपियमारुह्य मृकंडुतनयोवसत्॥
हिरण्यगर्भोविज्ञेयःससाक्षाद्वटरूपधृक्॥त
त्समीपेद्विजान्भक्त्यासंभोज्याक्षयपुण्यभाक्
॥श्रुतिभिःपरिपठ्यंतेसितासितसरिद्वरे॥त
त्राप्लुतादिवंयान्तियेमृतास्तेपुनर्भवाः॥शि

वलोकाद्ब्रह्मलोकादुमालोकपरात्पुनः॥कुमार
लोकाद्वैकुंठात्सप्तलोकात्समंततः॥तपोजन
महर्भ्यश्चसर्वेस्वर्लोकवासिनः॥भुवोर्लोका
श्चभूर्लोकानागलोकास्तथाखिलात्॥अचला
हिमवन्मुख्याःकल्पवृक्षादयोनगाः॥स्नातुंमा
घेसमायान्तिप्रयागमरुणोदये॥देवाङ्गनाप्रा
र्थयन्तियत्प्रयागानिलानपि॥तेपिनःपावयि
ष्यन्तिकिंकुर्मःपङ्गवोवयम्॥अश्वमेधादिया
गाश्चप्रयागस्यरजःपुनः॥तुलितंब्रह्मणापूर्वं
नतेतद्रजसासमाः॥अद्यागतानिपापानिबहु
जन्मार्जितान्यपिप्रयागनामश्रवणात् क्षीयंते
तीवविह्वलम्॥धर्मतीर्थमिदंसम्यगर्थतीर्थ
मिदंपरम्॥ब्रह्महत्यादिपापानितावद्गर्ज्जंति
देहिषु॥यावन्मज्जन्तिनोमाघेप्रयागेपापहा
रिणि॥कौर्मे॥इदंसत्यंद्विजातीनांसाधूनामा
त्मजस्यच॥सुहृदांचजपेत्कर्णेशिष्यस्यानुग
तस्यच॥इदंधन्यमिदंस्वर्ग्यमिदंमेध्यमिदंसु
खम्॥इदंपुण्यमिदंरम्यंपावनंधर्ममुत्तमम्
॥महर्षीणामिदंगुह्यंसर्वपापप्रमोचनम्॥अ
त्राधीतमिदंध्यायन्निर्मलत्वमवाप्नुयात्॥य
श्चेदंशृणुयान्नित्यंतीर्थपुण्यंतथाशुचिः॥यात
स्मरत्वंलभतेनाकपृष्ठेसमोदतइत्यादि॥अथ

प्रयागस्नानफलम्॥ तथाचाश्वलायनानांप
रिशिष्टश्रुतिः॥ सितासितेसरितेयत्रसङ्गथे
तत्राप्लुतासोदिवमुत्पतन्ति॥ येवैतन्वंविसृ
जंतिधीरास्तेजनासोमृतत्वंभजन्ते॥ अयमर्
थः॥ सितासितेश्वेतकृष्णेगङ्गायमुनेनद्यौसङ्ग
तेयत्रसङ्गंप्राप्ते॥ एवंभूतस्तीर्थराजः तत्रा
प्लुतासःस्नाताजना॥ दिवंस्वर्गमुत्पतन्तिया
न्ति॥ मात्स्येपि॥ एतत्प्रजापतेःक्षेत्रंत्रिषुलोके
षुविश्रुतम्॥ अत्रस्नातादिवंयान्तियेमृतास्ते
पुनर्भवाः॥ एवंस्नानफलमुक्तातत्रप्राणत्या
गफलमाह॥ येवैइतिवैत्वर्थे॥ तनुंशरीरंविसृ
जन्तित्यजन्ति तेजनासोजनाःप्राणिनःअमृ
तत्वंमोक्षंभजन्तेप्राप्नुवन्ति॥ तथातत्रैवपरि
शिष्टान्तरम्॥ यत्रगंगाचयमुनायत्रप्राचीस
रस्वती॥ यत्रसोमेश्वरोदेवः तत्रमाममृतंकृधी
न्द्रायेन्दोपरिस्रवेति॥ तथाब्रह्मपुराणे॥ अवि
मुक्तेविमुच्यन्तेतारकज्ञानजन्मना॥ विनाज्ञा
नंप्रयागेस्मिन्मुच्यन्तेसर्वजन्तवः॥ महाभा
रतेपि॥ नलोकवचनात्तातनवेदवचनादपि॥
मतिरुत्क्रमणीयामेप्रयागमरणंप्रति॥ लोक
वेदविरुद्धस्याप्यपमृत्योरपिमुक्तिप्रदायक
त्वमितिसिद्धम्॥ अथप्रयागस्मरणफलम्॥ मा

त्स्ये ॥ प्रयागं संस्मरन्नित्यं सहास्माभिर्युधिष्ठिर ॥ स्वयं प्राप्स्यसि राजेन्द्र स्वर्गलोकं न संशयः ॥ स्कान्दे ॥ बहु वाल्पतरं वापि पापं यस्य नराधिप ॥ प्रयागं स्मरमाणस्य सर्वमायाति संक्षयम् ॥ प्रयागं स्मरमाणश्च यस्तु प्राणान्परित्यजेत् ॥ ब्रह्मलोकमवाप्नोति वदन्ति मुनिपुंगवाः सर्वकामप्रदा यस्मा मही यत्र हिरण्मयी ॥ ऋषयो मुनयः सिद्धास्तत्र लोके स गच्छतीत्यादि ॥ अथ नाममहिमा ॥ स्कान्दे ॥ मज्जागतानि पापानि बहुजन्मार्जितान्यपि ॥ प्रयागनामश्रवणात्क्षीयंते राजसत्तम ॥ नाममात्रस्मृतेर्यस्य प्रयागस्य त्रिकालतः ॥ स्मर्त्तुः शरीरे नो जातु पापं वसति कुत्रचित् ॥ ब्राह्मे ॥ तीर्थराजं तु ये यान्ति ये स्मरन्ति सदा भुवि ॥ ते सर्वपापनिर्मुक्ताः पदं गच्छंत्यनामयमिति ॥ अथ प्रयागशब्दनिर्वचनम् ॥ स्कान्दे ॥ प्रकृष्टं सर्वयागेभ्यः प्रयागमिति गीयते ॥ दृष्ट्वा प्रकृष्टं यागेभ्यः पुष्टेभ्यो दक्षिणादिभिः प्रयागमिति तन्नाम कृतं हरिहरादिभिः ॥ ब्राह्मे ॥ प्रकृष्टत्वात्प्रयागोसौ प्राधान्याद्राजशब्दवान् ॥ अत्रोभयथा पुराणे प्रयोगादुभयलिङ्गः ॥ प्रयागशब्दः तत्र तीर्थक्षेत्रादिशब्दसामानाधिकरण्ये क्लीवता ॥ तीर्थराजादिशब्दसामानाधिक-

न्येपुल्लिङ्गतेतिवृद्धाः॥ अथप्रयागगमनम्॥
कौर्म्ये॥ प्रयागगमनंश्रेष्ठंनराणांपापकर्मणा
म्॥ तत्रदेवोमहादेवोरुद्रोविश्वामरेश्वरः॥स
हास्तेभगवान्ब्रह्मास्वयम्भुरपिदैवतैः॥मात्स्ये
॥भगवन्केनविधिनागन्तव्यंधर्मनिश्चयैः॥ प्र
यागेयोविधिःप्रोक्तःतन्मेब्रूहिमहामुने॥मार्क
ण्डेयउवाच॥ कथयिष्यामितेवत्सतीर्थयात्रा
विधिक्रमम्॥ आर्षेणेवविधानेनयथादृष्टंय
थाश्रुतम्॥ प्रयागतीर्थयात्रार्थीयःप्रयातिनरः
क्वचित्॥बलीवर्दसमारूढःशृणुतस्यापियत्फ
लम्॥ नरकेवसतेघोरेगवांक्रोधोहिदारुणः॥
सलिलंचनगृण्हन्तिपितरस्तस्यदेहिनः॥ऐश्व
र्यलोभान्मोहाद्वागच्छेद्यानेनयोनरः॥निष्फ
लंतस्यतत्तीर्थतस्माद्यानंविवर्जयेत्॥ तथाऽ
न्यत्रअज्ञानेनापियस्येहतीर्थयात्रादिकंभवे
त्॥ सर्वकामसमृद्धस्सस्वर्गलोकेमहीयते॥
स्थानंचलभतेनित्यंधनधान्यसमाकुलम्॥ब्रा
ह्मे॥प्रयागाभिमुखोभूत्वापादमेकमपिप्रभो
॥स्मरन्नागच्छतेजन्तुःसर्वपापैःप्रमुच्यते॥अ
थदर्शनम्॥प्रयागंप्रकृत्यविष्णुः॥ब्रह्महत्यादि
पापानिसप्तजन्मार्जितान्यपि॥दर्शनादस्यती
र्थस्यविनाशंयांतितत्क्षणात्॥कौर्म्ये॥दर्शनात्त

स्यतीर्थस्यनामसंकीर्त्तनादपि॥ मृत्तिकालेपना
द्वापिनरःपापात्प्रमुच्यते॥ यथा॥ एवंदृष्ट्वातुतत्ती
र्थंप्रयागंपरमंपदम्॥ मुच्यतेसर्वपापेभ्यःशशां
कइवराहुणा॥ ब्राह्मे॥ गंगायमुनयोर्मध्येगुप्ता
यत्रसरस्वती॥ तस्यदर्शनमात्रेणपूतोभवति
पातकी॥ तथा॥ तीर्थराजप्रयागस्यदर्शनंभुवि
दुर्लभम्॥ किंपुनःस्नानपानानांफलंजानाति
योबुधः॥ नारदीये॥ गङ्गायमुनयोर्योगोज्ञेयस्त
त्राप्यनुत्तमः॥ यस्यदर्शनमात्रेणनरायान्तिप
रांगतिम्॥ तत्रापीतिप्रकृतत्वात्तीर्थमध्ये॥ अ
थप्रवेशः कौर्म्ये॥ तथा॥ पंचयोजनविस्तीर्णंप्र
यागस्यतुमंडलम्॥ प्रविष्टमात्रेतद्भूमावश्व
मेधःपदेपदे॥ अथप्रयागादिपरिमाणम्॥ मात्स्ये
॥ पञ्चयोजनविस्तीर्णंप्रयागस्यतुमंडलम्॥ अ
त्रब्रह्मणायूपंमध्येशंकुंप्रकल्प्यसार्द्धयोजनद्व
यपरिमितत्वात्परितोवर्त्तुलक्षेत्रेनिष्पादिते
पंचयोजनमंडलंज्ञेयम्॥ इदंव्यापकंक्षेत्रम्॥
एतद्व्याप्यंचप्रयागक्षेत्रंतत्प्रमाणन्तुमात्स्ये॥
आप्रयागंप्रतिष्ठानादापुरोवासुकेर्ह्रदात्॥ क
म्बलाश्वतरौनागौनागश्चबहुमूलकः॥ एतत्प्र
जापतेःक्षेत्रंत्रिषुलोकेषुविश्रुतम्॥ आप्रतिष्ठाना
दित्यन्वयः॥ प्रतिष्ठानशब्देनतत्कूपोलक्ष्यते॥ त

तश्चप्राच्यांकूर्मोवधिः।उत्तरतोवासुकीह्रदः।पश्चि
मेकम्बलाश्वतरौ दक्षिणेबहुमूलकः॥एवंदि
गवधिषूक्तेषुतेभ्यश्चतुरस्रसाधनप्रकारेणको
णेषुसाधितेषुचतुरस्रंयत्संपद्यतेतत्प्रयागक्षे
त्रमिति सम्मिलितार्थः॥एतन्मध्येपिवेणीक्षे
त्रम्॥तच्चविंशतिधनुःप्रमाणम्॥ माघः सिता
सितेविप्रराजसूर्यैःसमोभवेत्॥धनुर्विंशतिवि
स्तीर्णंसितनीलांबुसङ्गमइतिपाद्मोक्तेर्वेण्याए
व शितासितइति संज्ञान्तरम्॥इदमेवक्षेत्र
मवधिभिरुपलक्ष्योक्तम्॥ अत्रैवक्षेत्रेऽसुत्यजां
मोक्षोपिश्रुतौसितासितइत्युक्तेः॥पाद्मे॥का
लिन्द्याउत्तरेकूलेभागीरथ्याश्चपश्चिमे॥वटस्य
पूर्वदिग्भागेस्नातःकिमनुशोचतीत्युक्तेश्चेति
॥अथप्रयागेवपनविचारः॥तथाचदेवलः॥मु
ण्डनञ्चोपवासञ्चसर्वतीर्थेष्वयंविधिः॥वर्जं
यित्वाकुरुक्षेत्रंविशालांविरजांगयामिति॥का
शीखण्डे॥सप्तधातुमयीभूततनोपापानियानि
वै॥केशेषुतानितिष्ठन्तिवपनाद्यांतितान्यपि॥
अत्रप्रकरणात्प्रयागे तथान्यत्र॥प्रयागेवपनं
कुर्याद्गयायांपिण्डपातनम्॥दानंदद्यात्कुरुक्षे
त्रेवाराणस्यांतनुंत्यजेत्॥किंगयापिंडदानेन
काश्यांवामरणेनकिम्॥किंकुरुक्षेत्रदानेनप्र

यागेवपनंयदि॥ अत्रमुण्डनस्यकुरुक्षेत्रदाना
दिसाम्यम्॥ नकुरुक्षेत्रादिपरित्यज्यात्रमुण्ड
नमेवकार्यम्॥ अतिशयमाहात्म्यबोधकवा-
क्यानामन्यतीर्थोक्तफलानामत्राप्यनुस-
न्धानमित्युपपत्तेः॥ केशानांजावतीसंख्याछि
न्नानांजान्हवीजले॥ तावद्वर्षसहस्राणिस्वर्ग
लोकेमहीयतइत्यादिवाक्यवशात्प्रयागाव
च्छिन्नगंगायामपिमुण्डनंकाम्यंप्राप्नोति॥ तत्र
काम्ययोर्गंगाप्रयागमुण्डनयोर्नानाफलकामा
धिकारकत्वात्॥ कामनयोश्चयुगपदसंभ
वात्॥ तन्त्रप्रसङ्गेनतुयुगपदसिद्धिः॥ अथ
प्रयागेजीवत्पितृकेनापिसस्मश्रुवपनंकार्यम्
॥ जीवत्पितापिकुर्वीतवपनंतीर्थनायके॥ अ
जातचौलोवालोऽपिब्रह्मचारीकुमारिकेतिपा
द्मोक्तेः॥ गंगायांभास्करक्षेत्रेमातापित्रोर्गुरोर्मृ
तौ॥ आधानेसोमपानेचवपनंसप्तसुस्मृतमि
त्युक्तेः॥ विनात्तीर्थेविनायज्ञंमातापित्रोर्मृतिं
विना॥ योवापयतिलोमानिसपुत्रःकुलघात
कइत्युक्तेश्चप्रतियोगितयातत्वम्॥ पूर्वोक्त
सप्तधातुमयीभूतेति तथाप्रभासखण्डे॥ के
शमूलान्युपाश्रित्यसर्वपापानिदेहिनाम्॥ ति
ष्ठंतितीर्थस्नानेनतस्मात्तांस्तत्रवापयेदितिवच

यागेवपनंयदि ॥ अत्र मुण्डनस्यकुरुक्षेत्रदाना
दिसाम्यम् ॥ नकुरुक्षेत्रादिपरित्यज्यात्र मुण्ड
नमेवकार्यम् ॥ अतिशयमाहात्म्यबोधकवा
क्यानामन्यतीर्थोक्तफलानामुचात्राप्यनुस
न्धानमित्युपपत्तेः ॥ केशानांजावतीसंख्याछि
न्नानांजान्हवीजले ॥ तावद्वर्षसहस्राणिस्वर्ग
लोकेमहीयतइत्यादिवाक्यवशात्प्रयागाव
च्छिन्नगंगायामपिमुण्डनंकाम्यंप्राप्नोति ॥ तत्र
काम्ययोर्गंगाप्रयागमुण्डनयोर्नानाफलकामा
धिकारकत्वात् ॥ कामनयोश्चयुगपदसंभ
वात् ॥ तन्त्रप्रसङ्गेनतुयुगपदसिद्धिः ॥ अथ
प्रयागेजीवत्पितृकेनापिसश्मश्रुवपनंकार्यम्
॥ जीवत्पितापिकुर्वीतवपनंतीर्थनायके ॥ अ
जातचौलोबालोऽपिब्रह्मचारीकुमारिकेतिपा
द्मोक्तेः ॥ गंगायांभास्करक्षेत्रेमातापित्रोर्गुरोर्मृ
तौ ॥ आधानेसोमपानेच्चवपनंसप्तसुस्मृतमि
त्युक्तेः ॥ विनातीर्थेविनायज्ञंमातापित्रोर्मृतिं
विना ॥ योवापयतिलोमानिसपुत्रःकुलघात
कइत्युक्तेश्चप्रतियोगितयातत्वम् ॥ पूर्वोक्त
सप्तधातुमयीभूतेति तथाप्रभासखण्डे ॥ के
शमूलान्युपाश्रित्यसर्वपापानिदेहिनाम् ॥ ति
ष्ठंतितीर्थस्नानेनतस्मात्तांस्तत्रवापयेदितिवच

नयोः सर्वकेशवपने फलं स्मृतेः ॥ गंगायां भास्कर क्षेत्रे मुंडनं यो न कारयेत् ॥ स कोटिकुलसंयुक्तः आकल्पं रौरवं वसेदित्यकर्णनिन्दाश्रुतेश्च ॥ विधवानां नारीणां वपनं भवत्येव ॥ स्त्रीणां स भर्तृकानां तु देशाचारान्मुण्डने व्यवस्था ॥ तदुक्तम् ॥ यद्यपि स्यात्स्वयं ब्रह्मा त्रैलोक्याकर्षणक्षमः ॥ तथापि लौकिकाचारं मनसापि न लंघयेदिति ॥ यस्मिन्देशे य आचारः पारंपर्यक्रमागत इति मनुनापि ॥ तस्मात्केशमूलान्युपाश्रित्येति विधेः ॥ बहूनां निषेधानां चोपलब्धेस्सधवानां ॥ नारीणां तु मुण्डनं द्व्यङ्गुलकर्त्तनं चेत्युभयं सिध्यति ॥ तथाहि निषेधकानि ॥ केशानां तु नारीणां वपनं व्रतयज्ञयोः ॥ गोवधादिषु सर्वेषु छेदयेद्द्व्यङ्गुलद्वयम् ॥ तथा ॥ सर्वान्केशान्समुद्धृत्य छेदयेद्द्व्यङ्गुलद्वयम् ॥ एवमेव तु नारीणां मुण्डमुण्डनमादिशेदिति ॥ प्रायश्चित्तप्रकरणे विश्रुतस्याकाङ्क्षातौल्येनात्रान्वयः योग्यत्वात् ॥ प्रभासखण्डे ॥ क्षुरकर्म न शस्तं स्याज्ज्योषितान्तु वरानने ॥ सभर्तृकाणां तत्रैव विधिं तासां शृणुष्व मे ॥ सर्वान्केशान्समुद्धृत्य छेदयेद्द्व्यङ्गुलद्वयम् ॥ तीर्थादिषु सभर्तृणां स्यादेवं केशवापनमिति ॥ दिवोदासीये ॥ विद्वद्विप्रनृपस्त्रीणां नेष्यते केशवापनम् ॥ सर्वा

न्केशान्समुद्धृत्यछेदयेदङ्गुलद्वयमिति॥एतेश्च सभर्तृकाणांनारीणांद्व्यङ्गुलंत्र्यंगुलंवाछेदयेदि त्येववपनमितिसिद्धम्॥यत्तुप्रभासखण्डीय न्तुवचः तत्रैवेतिपदश्रुतेतत्तीर्थमात्रविषयक मितितन्न॥तदग्रिमपद्येतीर्थादिष्वितिश्रुत्या आदिघटिततीर्थपदस्यस्वारस्यभंगापत्तेः॥स धवानामपिवेणीदानम् पाद्मे॥सधवाप्यत्रकु र्वीतपत्यासहसमागता॥मुण्डनंमण्डनंवे ण्यांपतिमण्डनकाम्यया॥यस्यावेणीभवेद्दे वास्त्रिवेणीतटलम्बिनी॥सुभगासुप्रजाढ्या साभविष्यतिपुनःपुनः॥द्व्यङ्गुलात्र्यङ्गुलावापि त्रदेयाचतुरङ्गुला॥चिबुकान्ताथवादेयाकेशा न्तावायथेच्छया॥वेणीप्रदानात्सिध्यन्तिसर्वए वमनोरथाः॥चिरंटिनीभिर्देयात्रवेण्याचाराद्य यातथा॥देवर्षिनागपत्न्यश्चप्रयागेपतिभिस्स ह॥वेण्यांवेणीप्रदानंचचक्रुरागस्त्यसुव्रताइ त्यादि॥चिरंटिनीयुवती॥इदंचप्रयागेमुंडनं योजनत्रयाधिकदेशाद्यात्रार्थमागतेनैवकार्य म्॥नन्यूनदेशागतेननापिलौकिककार्योद्दे श्यागतेन॥तथाहिपाद्मे॥योजनत्रितयादूर्ध्व मागतेनात्रमुण्डनम्॥यात्रोद्देशेनवैकार्य्यंना न्यदावश्यकम्भवेत्॥ऊर्द्ध्वमब्दाद्द्विमासोनापुन

स्तीर्थे व्रजेद्यदि॥ मुण्डनञ्चोपवासञ्च ततोय
त्नेन कारयेदिति॥ प्रयागे प्रतिपात्रं तु योजनत्रय
मिष्यते॥ क्षौरं कृत्वा तु विधिवत्ततः स्नायात्सि
तासिते॥ उदङ्मुखः प्राङ्मुखो वा वपनं कारये
त्सुधीः॥ केशश्मश्रु लोमनखान्युदक्संस्थानि
वापयेदिति॥ प्रयागे मुण्डनविचारः॥ अथ तत्र
काम्यस्नानदानादिफलम्॥ ब्रह्माण्डपुराणे॥
कुरुक्षेत्रे प्रयागे च गंगासागरसंगमे॥ गंगायां
पुष्करे सेतौ गंगाद्वारे च नैमिषे॥ यद्दानं दीयते
शक्त्या तद्नंत्याय कल्पते॥ कूर्मपुराणे॥ स्त्री
सहस्राकुले रम्ये मंदाकिन्यास्तटे शुभे॥ मोदते
स्तुतिभिः सार्द्धं सुकृतेनेह कर्मणा॥ सिद्धचारण
गंधर्वैः पूज्यते दिवि दैवतैः॥ ततः स्वर्गात्परिभ्र
ष्टो जम्बूद्वीपपतिर्भवेत्॥ ततः शुभानि कर्माणि
चिन्तमानः पुनः पुनः॥ गुणवान्वित्तसंपन्नो
भवतीह न संशयः॥ कर्मणा मनसा वाचा सत्ये
धर्मे प्रतिष्ठितः॥ गंगायमुनयोर्मध्ये यस्तु ग्रासं
प्रयच्छति॥ सुवर्णमथ मुक्तां वा तथैवान्यान्प
रिग्रसन्॥ कपिलां पाटलावर्णां यस्तु धेनुं प्रय
च्छति॥ सुवर्णशृंगीं रौप्यखुरीं चैलकण्ठीं पय
स्विनीम्॥ यावन्ति तस्या रोमाणि संति गात्रेषु
तापसाः॥ तावद्वर्षसहस्राणि रुद्रलोके महीयते

तथा ॥ गंगायमुनयोर्मध्ये यस्तु कन्यां प्रयच्छति ॥ आर्षेण तु विधानेन यथाविभवविस्तरम् ॥ न स पश्यति तं घोरं नरकं तेन कर्मणा ॥ उत्तरान् स कुरून् गत्वा मोदते कालसंक्षयम् ॥ मात्स्येऽपि ॥ कपिलामित्याद्युक्तम् ॥ गवां शतसहस्रेभ्यो दद्यादेकां पयस्विनीम् ॥ पुत्रान्दारांस्तथा भृत्यान् गौरेका प्रतितारयेदिति ॥ अथ प्रयागे सामान्यस्नानम् ॥ कूर्मपुराणे ॥ एतत्प्रजापतिक्षेत्रं त्रिषु लोकेषु विश्रुतम् ॥ अत्र स्नाता दिवं यान्ति ये मृतास्तेऽपुनर्भवाः ॥ तथा ॥ तत्राभिषेकं यः कुर्यात्संगमे संसितव्रतः ॥ तुल्यं फलमवाप्नोति राजसूयाश्वमेधयोः ॥ तथा ॥ तत्र स्नात्वा च पीत्वा च यमुनायां युधिष्ठिर ॥ सर्वपापविनिर्मुक्तो पूतात्मा सप्तमं कुलम् ॥ पाद्मे ॥ प्रयागस्नानतो नास्ति किमन्यदधिकं परम् ॥ प्रायश्चित्तं तपोरूपं दानरूपं क्रियाधिकम् ॥ तथा ॥ अथ प्रयागे माघस्नानमाहात्म्यम् ॥ तत्र कूर्मपुराणे ॥ षष्टिकोटिसहस्राणि षष्टिकोटिशतानि च ॥ माघमासे गमिष्यन्ति गंगायमुनसंगमम् ॥ मात्स्ये ॥ सितासिते तु ये स्नाता माघमासे युधिष्ठिर ॥ न तेषां पुनरावृत्तिः कल्पकोटिशतैरपि ॥ दश तीर्थसहस्राणि दश कोट्यस्तथापराः ॥ माघमासे त्र-

यागेतुगंगायमुनसंगमे॥ अथतत्रगंगामहिमा पद्मपुराणे॥ कुरुक्षेत्रसमागंगायत्रतत्रावगाहिता॥ तस्माद्दशगुणाप्रोक्तायत्रविन्ध्येनसंगता॥ तस्माच्छतगुणाप्रोक्ताकाश्यामुत्तरवाहिनी॥ काश्याःशतगुणाप्रोक्तागंगायमुनसंगमे॥ सहस्रगुणितासापिभवेत्पश्चिमवाहिनी॥ पश्चिमाभिमुखीगंगाकालिंद्यासहसंगता॥ हंतिकल्पकृतंपापंसामाघेनृपदुर्लभा॥ अमृतंकथ्यतेराजन्सावेणीभुविदुर्लभा॥ तस्यांमाघेमुहूर्त्तंचदेवानामपिदुर्लभम्॥ तथा॥ पृथिव्यांयानितीर्थानिपुर्य्यस्सन्तीहयाःपुनः॥ स्नातुमायांतितावेण्यांमाघेमासिनराधिप॥ तथा॥ ब्रह्मविष्ण्वादीननुक्रम्योक्तम्॥ अणिमादिगुणोपेतायेचान्येतत्वदर्शिनाः॥ स्नातुमायांतितेसर्वेमाघेवेण्यांनराधिप॥ तथा॥ गंगायेनावगाहन्तेमाघेमासिनराधिप॥ चतुर्युगसहस्रान्तेनपतन्तिसुरालयम्॥ शतेनगुणितंमाघेसहस्रंराजसत्तम॥ निर्दिष्टमृषिभिःस्नानंगंगायमुनसंगमे॥ तथा॥ माघस्तुप्राप्यतेधन्यैःप्रयागेद्विजसत्तम॥ अपुनर्भवदंयत्रसितासितजलंयतः॥ तथा॥ स्नाताहियेमाकरभास्करोदयेतीर्थेप्रयागेसुरसिंधुसंगमे॥ तेषांगृहद्वारमलंकरो

तिभृंगावलिःकुंजरकर्णताडिता॥ तथा॥ सि
तासितेतुयोमज्जेदपि पापशतावृतः॥ मकर
स्थेरवौमाघेनसपापेषुमज्जति॥ दुर्गेयावैष्ण
वीमायादेवैरपिसुदुस्तरा॥ प्रयागेहन्यतेसा
तुमाघेमासिनराधिप॥ तेषुतेषुचलोकेषुभु
क्त्वाभोगाननेकशः॥ पश्चात्त्वर्क्के विलीयंतेप्र
यागेमाघमज्जिनः॥ राजसूयसहस्रस्यराज
न्नविकलंफलम्॥ सितासितेचमाघेतुस्नाता
नांभवतिध्रुवम्॥ तथा॥ आकल्पजन्मभिःसार्द्धं
यत्पापंसंचितन्नरैः॥ तन्नवेन्नस्मसान्माघेस्ना
तानांतुसितासितइति॥ पद्मपुराणीयमाघमा
हात्म्येद्रष्टव्यानि॥ तथा॥ पुष्करेचकुरुक्षेत्रेब्र
ह्मावर्त्तेपृथूदके॥ अविमुक्तेप्रयागेचगंगासाग
रसंगमे॥ यत्फलंदशभिर्वर्षैःप्राप्यतेसंजितेंद्रि
यैः॥ तत्फलंप्राप्यतेमाघेत्र्यहस्नानान्नसंशयः
॥ अथात्रस्नानेदिनविशेषेफलविशेषः॥ यमः॥
कार्त्तिक्यांपुष्करेस्नातःसर्वपापैःप्रमुच्यते॥ मा
घ्यांस्नातःप्रयागेतुमुच्यतेसर्वपातकैः॥ भारते
आङ्गिरसतीर्थयात्रायाम्॥ दशतीर्थसहस्रा
णित्रिंशत्कोट्यस्तथापराः॥ समागच्छंतिमाघ्यां
तुप्रयागेभरतर्षभ॥ तथान्यत्रापि॥ अरुणोदय
वेलायांशुक्लामाघस्यसप्तमी॥ प्रयागेयदिलभ्ये

तकोटिसूर्यग्रहैः समा॥ तथा॥ रवेर्मकरसंक्रां
तौप्रयागेस्नानदानयोः॥ फलमानंनशक्नोति
कर्त्तुम्ब्रह्मापितत्त्वतः॥ एवं॥ प्रयागातिरिक्तेपि
सप्तम्यादिस्नानवचनानि॥ विष्णुः॥ सूर्यग्रहण
तुल्यातुशुक्लामाघस्यसप्तमी॥ अरुणोदयवेला
यांतस्यांस्नानंमहाफलमित्यादि॥ तथा॥ माघे
मासिसितेपक्षेसप्तमीकोटिभास्करा॥ कुर्या
त्स्नानार्घ्यदानाभ्यामायुरारोग्यसम्पदः॥ अत्र
विधिर्भविष्येवसिष्ठः॥ कृत्वाषष्ठ्यामेकभक्तंस
प्तम्यांनिश्चलंजलम्॥ रात्र्यंतेचालयेथास्त्वंद
त्वाशिरसिदीपकम्॥ तथा॥ जलमितिप्रक्रम्य
॥ नकेनचाल्यतेयावत्तावत्स्नानंसमाचरेत्॥
सौवर्णेराजतेपात्रेभक्त्यालाभमयेपिच॥ तैलेन
वर्त्तिर्दातव्यामहाराजनरंजिता॥ समाहितमना
भूत्वादत्वाशिरसिदीपकम्॥ भास्करंतूदयेध्या
त्वाइमंमन्त्रमुदीरयेत्॥ नमस्तेरुद्ररूपायरसा
नांपतयेनमः॥ वरुणायनमस्तेस्तुहरिवासन
मोस्तुते॥ जलेपरिहरेद्दीपंध्यात्वासंतर्प्यदेव
ता॥ इति॥ अर्घ्यदानमन्त्रश्च॥ यद्यजन्मकृतं
पापंमयाजन्मसुसप्तसु॥ तन्मेरोगञ्चशोकञ्च
माकरीहन्तुसप्तमीत्यादि॥ अथमाघामायांवि
शेषोविष्णुपुराणे॥ माघासितेपंचदशीकदाचि

दुपेतियोगं यदि वारुणेन॥ ऋक्षेण कालः सपरः पितॄणां नह्यल्पपुण्यैर्नृप लभ्यते सौ॥ वारुणम्रक्षं शतभिषा तथा॥ तत्रैव चेज्ज्ञाद्रूपदास्तु पूर्वा कालेतदा तत्क्रियते पितृभ्यः॥ श्राद्धे परां तृप्तिमवाप्नुवन्ति युगान्सहस्रं पितरश्च तेन॥ भारते॥ माघमाहात्म्यं प्रकृत्य॥ कालेधनिष्ठा यदि नाम तस्मिन्भवन्ति भूपाल तदा पितृभ्यः॥ दत्तं तिलान्नं प्रददाति तृप्तिं वर्षायुतं तत्कुलजैर्मनुष्यैः॥ तत्रैव अर्द्धोदयमहिमा॥ अमार्कपातश्रवणैर्युक्ता चेत्पुष्यमाघयोः॥ अर्द्धोदयः स विज्ञेयः कोटिसूर्य्यग्रहैः समः॥ पुष्यमाघयोः संधौ चामेत्यर्थः॥ पातो व्यतीपातः॥ दिवैवयोगः सस्तोयं न तु रात्रौ कदाचनेति स्कान्दे॥ अर्द्धोदये तु संप्राप्ते सर्वं गंगासमं जलम्॥ शुद्धात्मानो द्विजाः सर्वे नवेयुर्ब्रह्मसम्मिताः॥ यत्किंचित्क्रियते दानं तत्र तन्मेरुसन्निभम्॥ अत्र व्रतविशेषस्तु हेमाद्रिव्रतकाण्डादेवावगंतव्यः॥ तथा मकरसंक्रांतौ पौर्णमास्याममावास्यादि कर्त्तव्यमपि तत एवावगंतव्यमत्र सप्तम्यादौ सकृत्स्नानेनैव तन्त्रेण माघस्नानमिति स्नानफलम्॥ अथ माघस्नानविधिः तदुक्तं पाद्मे॥ सर्वाधिकारिणो ह्यत्र विष्णुभक्तो यथा नृप॥ सर्वेषां सर्वदा माघः सर्वपापप्रणाशनः

ति॥ मकरस्थे रवौ माघे प्रातःकाले तथामले॥ नॄणां स्त्रीणां तथा स्नानं स्वर्गदं पापिनामपीति॥ भविष्ये॥ ब्रह्मचारी गृहस्थो वा वानप्रस्थोऽथ भिक्षुकः॥ बालवृद्धयुवानश्च नरनारीनपुंसकाः॥ स्नात्वा माघे शुभे तीर्थे प्राप्नुवन्तीप्सितं फलम्॥ तत्रापि विशेषः॥ ब्रह्मक्षत्रविशां चैव मन्त्रवत्स्नानमिष्यते॥ तूष्णीमेव तु शूद्राणां तथैव कुरुनन्दन॥ नमस्कारोऽथवा कार्य्यः सर्वपापौघहानिद इति॥ शूद्राणामिति व्रात्यजातीनामुपलक्षणम्॥ अथ माघस्नानकालः॥ तत्र पाद्मे॥ मकरस्थे रवौ यो हि न स्नातोऽभ्युदिते रवौ॥ कथं पापैः प्रमुच्येत स कथं त्रिदिवं व्रजेत्॥ अन्यच्च॥ माघमासे रटंत्यापः किञ्चिदभ्युदिते रवौ॥ ब्रह्मघ्नं वा सुरापं वा कम्पतं तत्पुनीमहे॥ तथा॥ ये माघमासे वरतीर्थमज्जनं कुर्वन्ति चार्द्धोदितसूर्यमण्डले॥ स्नात्वा च माघे हरिमर्चयन्ति ये स्वर्गच्युता भूपतयो भवन्ति ते॥ अथ प्रयागीयतीर्थानि कौर्म्मे मात्स्ये च कम्बलाश्वतरौ नागौ यमुना दक्षिणे तटे॥ तत्र स्नात्वा च पीत्वा च मुच्यते सर्वपातकैः॥ पूर्वपार्श्वे तु गंगायास्त्रैलोक्ये ख्यातिमान् नृप अवटः सर्वसामुद्रः प्रतिष्ठानं च विश्रुतम्॥ ब्रह्मचारी जितक्रोधस्त्रिरात्रं यदि तिष्ठति॥ सर्वपापविशुद्धात्मा सोऽश्व

मेधफलं लभेत्॥ उत्तरेण प्रतिष्ठानाद्भागीरथ्या
स्तु पूर्वतः॥ हंसप्रतपनं नाम तीर्थं लोकेषु विश्रुत
म्॥ अश्वमेधफलं तत्र स्नातमात्रस्य जायते॥ अ
थाक्षयवटमहिमा॥ अकामो वा सकामो वा वटमू
ले मुनीश्वराः॥ शीघ्रं प्राणान्प्रमुञ्चेत यदीच्छेत्प
रमां गतिम्॥ वटमूले समासाद्य यस्तु प्राणान्परि
त्यजेत्॥ सर्वलोकानतिक्रम्य स्वर्गलोकं स गच्छ
तीत्यादि॥ यामुने चोत्तरे तीरे प्रयागस्य तु दक्षि
णे॥ ऋणप्रमोचनं नाम तीर्थं च परमं स्मृतम्॥ एक
रात्रोषितः स्नात्वा ऋणात्तत्र प्रमुच्यते॥ सूर्यलोक
मवाप्नोति अनृणी च सदा भवेत्॥ तथा॥ अग्नितीर्थमिति ख्यातं यमुनादक्षिणे तटे॥ पश्चिमे धर्म
राजस्य तीर्थं त्वनरकं स्मृतम्॥ तत्र स्नाता दिवं
यांति ये मृतास्ते पुनर्भवाः॥ शुक्लपक्षे चतुर्दश्यां
स्नात्वा संतर्प्य वै शुचिः॥ धर्मराजं महापापै र्मुच्यते
नात्र संशयः॥ दश तीर्थसहस्राणि त्रिंशत्कोट्यस्त
था पराः॥ प्रयागे संस्थितानि स्युरेवमाहुर्मनीषि
णः॥ तिस्रः कोट्योर्द्धकोटी च तीर्थानां वायुरब्रवी
त्॥ दिवि क्षित्यंतरिक्षे च ते सर्वे जाह्नवी स्मृता॥ यत्र
गंगा महाभागा स देशस्तत्तपोवनम्॥ सिद्धिक्षेत्रं तु त
ज्ज्ञेयं गंगातीरसमन्वितम्॥ यत्र देवो महादेवो
देव्या सह महेश्वरः॥ आस्ते देवेश्वरो नित्यं तत्ती

र्थेतत्तपोवनम् ।। मत्स्यपुराणे ।। अथसन्ध्याव
टेरम्येब्रह्मचारीजितेन्द्रियः ।। उपासीनःशुचिःसं
ध्यांब्रह्मलोकमवाप्नुयात् । तथा ।। ततोभोगवतीं
गत्वावासुकेरुत्तरोत्तरम् ।। दशाश्वमेधिकंचैवती
र्थंतत्रपरंमहत् ।। कृताभिषेकस्तुवरःसोश्वमेध
फलंलभेत् ।। धनाढ्यस्तपवान्दान्तोदक्षोभवतिधा
र्मिकः ।। चतुर्वेदेषुयत्पुण्यंसत्यवादिषुयत्फलम्
।। अहिंसायास्तुयोधर्मोगमनादेवतत्फलम् ।। त
था ।। मीनसंनामतीर्थंतुगंगायामुत्तरेतटे ।। त्रि
रात्रोपोषितःस्नात्वासर्वकामानवाप्नुयात् । गोभू
हिरण्यदानेनयत्फलंप्राप्नुयान्नरः ।। सतत्फल
मवाप्नोतितत्तीर्थंस्मरतेतुयः ।। तथा ।। तपनस्य
सुतादेवीत्रिषुलोकेषुविश्रुता ।। अथयमुनाम
हिमा ।। समागतामहाभागायमुनायत्रनिम्नगा
।। येनैवनिसृतागंगातेनैवयमुनागता ।। योजनानां
सहस्रेषुकीर्त्तनात्पापनाशिनी ।। तत्रस्नात्वाचपी
त्वाचयमुनायांयुधिष्ठिर ।। कीर्त्तनाल्लभतेपुण्यं
दृष्ट्वाभद्राणिपश्यति ।। अवगाह्यचपीत्वाचपुना
त्यासप्तमंकुलम् ।। प्राणांस्त्यजतियस्तत्रसया
तिपरमांगतिम् ।। इदंसर्वंप्रयागावच्छिन्नयमु
नाविषयम् ।। तथा ।। एवंतीर्थसहस्राणियमुनाद
क्षिणेतटे ।। उत्तरेणप्रवक्ष्यामिआदित्यस्यमहा

त्मनः॥ तत्तीर्थं निरुजकं नाम यत्र देवाः सवासवाः॥ उपासते यथा सन्ध्यां नित्यकालं युधिष्ठिर॥ देवाः सेवन्ति तत्तीर्थं ये चान्ये विदुषो जनाः॥ अग्निपुराणे॥ वासुकेर्भोगवत्यत्र हंसस्यायतनं परम्॥ उर्वसीपुलिनं रम्यं तीर्थं सन्ध्यावटस्तथा॥ कोटितीर्थं चाश्वमेधं गंगायमुनमुत्तमम्॥ मानसं च तपोहीनं तीर्थं च ऋणमोचनमित्यादितीर्थान्युक्तानि॥ सितासितं यद्विप्रयागमुख्यं तच्छ्रितं तीर्थमहत्वमीरितम्॥ तीर्थान्तरैस्सप्तपुरीभिराद्रितं तं तीर्थराजे मनसा स्मरामि॥ ॐ॥ इति श्रीमन्महाराजाधिराजमहाराजरामवंशजश्रीमाधवसिंहकारिते तीर्थसुधानिधौ तीर्थराजतरङ्गः॥ ॐ॥

अथ पुष्करमाहात्म्यम्॥ महाभारते॥ पुष्करेषु महाभाग देवा मर्षिगणाः पुरा॥ सिद्धिं समभिसंप्राप्ताः पुण्येन महतान्विताः॥१॥ तत्राभिषेकं यः कुर्यात्पितृदेवार्चने रतः॥ अश्वमेधाद्दशगुणं फलं प्राहुर्मनीषिणः॥२॥ अप्येकं भोजयेद्विप्रं पुष्करारण्यमाश्रितः॥ तेनासौ कर्मणा भीष्म प्रेत्य चेह च मोदते॥३॥ शाकैर्मूलैः फलैर्वापि येन वर्त्तयते स्वयम्॥ तद्वै दद्याद्ब्राह्मणाय श्रद्धावाननसूयकः॥४॥ तेनैव प्राप्नुयात्प्राज्ञो हयमेधफलं नरः॥ ब्राह्मणाः क्षत्रिया वैश्याः शूद्रा वा राजसत्तम॥५॥ न वै योनौ प्रजा

यन्तेस्नातास्तीर्थेमहात्मनः॥अथकार्त्तिक्यांविशेषः॥ कार्त्तिकींतुविशेषेणयोभिगच्छतिपुष्करम्॥६॥प्राप्नुयात्सनरोलोकान्ब्रह्मणःसदनेक्षयान्॥अथस्मरणफलम्॥सायंप्रातःस्मरेद्यस्तुपुष्कराणिकृतांजलिः॥७॥उपस्पृष्टंभवेत्तेनसर्वतीर्थेषुभारत॥जन्मप्रभृतियत्पापंस्त्रियावापुरुषस्यवा॥८॥पुष्करस्नातमात्रस्यसर्वमेवप्रणस्यति॥यथासुराणांसर्वेषामादिस्तुमधुसूदनः॥९॥तथैवपुष्करंराजस्तीर्थानामादिरुच्यते॥दृष्ट्वाद्वादशवर्षाणिपुष्करेनियतःशुचिः॥१०॥क्रतून्सर्वानवाप्नोतिब्रह्मलोकंसगच्छति॥यस्तुवर्षशतंपूर्णमग्निहोत्रमुपासते॥११॥तत्रैकरात्रिवासफलम्॥कार्त्तिकींवावसेदेकांपुष्करेसममेवतत्॥अथतत्क्षेत्रेत्रीणिशृंगाणि॥त्रीणिशृंगाणिशुभ्राणित्रीणिप्रस्रवणानिच॥१२॥पुष्कराण्यादिसिद्धानिनविद्मस्तत्रकारणम्॥पुष्करंपुष्करेगंतुंदुष्करंपुष्करेतपः॥दुष्करंपुष्करेदानंवस्तुंचैवसुदुष्करम्॥उष्यद्वादशरात्रंतुनियतोनियताशनः॥प्रदक्षिणमुपावृत्यजंबूमार्गंसमाविशेत्॥१५॥जम्बूमार्गंसमाविश्यदेवर्षिपितृसेवितम्॥अश्वमेधमवाप्नोतिसर्वकामानवाप्नुयात्॥१६॥ ॥ इतिश्रीमन्महाराजाधिराज

महाराजश्रीरामवंशजश्रीमन्महाराजमाधवसिंहकारितेतीर्थसुधानिधौपुष्करतरङ्गः॥ ॥

अथकुरुक्षेत्रमाहात्म्यम्॥महाभारते॥पृथिव्यांनैमिषंतीर्थमन्तरिक्षेचपुष्करम्॥त्रयाणामपिलोकानांकुरुक्षेत्रंविशिष्यते॥अथकुरुक्षेत्रस्मरणमहिमा॥कुरुक्षेत्रंगमिष्यामिकुरुक्षेत्रेवसाम्यहम्॥यएवंसततंब्रूयात्सर्वपापैःप्रमुच्यते॥अथतत्रत्यपांसुमहिमा॥भारते॥पांशवोपिकुरुक्षेत्राद्वायुनासमुदीरिताः॥अपिदुष्कृतकर्म्माणंनयन्तिपरमांगतिम्॥अथवासमहिमा॥तत्स्थानप्रमाणञ्च दक्षिणेनसरस्वत्या दृषद्वत्युत्तरेणचयेवसन्तिकुरुक्षेत्रेतेवसन्ति त्रिविष्टपे॥तत्रमासंवसेद्वीरसरस्वत्यांयुधिष्ठिर॥यत्रब्रह्मादयोदेवाऋषयस्सिद्धचारणाः॥गन्धर्वाप्सरसोयक्षाःपन्नगाश्चमहीपते॥ब्रह्मक्षेत्रंमहापुण्यमभिगच्छन्ति भारत॥मानसफलम्॥मनसाप्यभिकामस्यकुरुक्षेत्रंयुधिष्ठिर॥पापानिविप्रणस्यन्तिब्रह्मलोकंचगच्छति॥गत्वाहिश्रद्धयाराजन्कुरुक्षेत्रंकुरुद्वह॥फलंप्राप्नोतिचतदाराजसूयाश्वमेधयोरित्यादि॥ ॥इतिश्रीमन्महाराजाधिराजश्रीराम—वंशजमाधवसिंहवर्म्मकारितेती

र्थेसुधानिधौकुरुक्षेत्रतरङ्गः॥ ॥अथनैमि
षमाहात्म्यम्॥ महाभारते॥ तस्यांदेवर्षिजुष्टा
यांनैमिषंनामभारत॥ यत्रतीर्थानिदेवानांपुण्या
निचपृथक्पृथक्॥ यत्रसागोमतीपुण्यारम्यादे
वर्षिसेविता॥ यज्ञहोमिश्चदेवानांसामित्रश्चवि
वस्वतः॥ तत्रस्नानदानादिकमहिमामहाभार
ते॥ ततस्तीर्थेषुपुण्येषुगोमत्याःपाण्डवान्नृप॥
कृताभिषेकाःप्रददुःगाश्चवित्तञ्चभारत॥ तत्र
देवान्पितृन्विप्रांस्तर्पयित्वापुनःपुनः॥ कन्याती
र्थेषुतीर्थेचगवांतीर्थेचभारत॥ कालतोयांविष
प्रस्थेगिरेप्रोष्यचकोरवाइति॥ अथतत्क्षेत्रप्र
माणम्॥ पाद्मे॥ योजनंपंचपंचाशन्नैमिषंशोन
कालयम्॥ हिमालयाद्दक्षिणेकूलेगोमत्याश्चो
त्तरेशुभे॥ शरयूभागीरथीमध्येसर्वतीर्थाश्रयं
भुवि॥ नैमिषेयोजनैःपंचनाभिभूमेःसनातन॥
कन्याकुब्जेतिविख्यातंगुह्यंतीर्थंसदामम॥ अ
थतत्प्रमाणम्॥ वार्ष्मतीचपुरीप्राच्यांदक्षिणे
तुकलापकः॥ भूमिग्रामंपश्चिमेचउत्तरेनैमिषा
लयम्॥ इति॥ तस्माच्चदक्षिणेभागेसंदोहस्था
नमुत्तमम्॥ संदोहाख्यापरादेवीयदंशाःकोटि
शःकलाः॥ अष्टम्यांचचतुर्दश्यांनवम्यांवामहा
मुने॥ तत्रयेनियमंकृत्वादेवानागानरादयः॥ संदो

हाख्येमहातीर्थेस्नानंदानंजपादिकम्॥कुर्वन्ति
कोटिगुणितंपुण्यंतुममप्रीतितः॥पुत्रार्थीलभ
तेपुत्रान्गुणरूपसमन्वितान्॥अथनैमिषकु
ञ्जमहिमा भारते॥ततोनैमिषकुंजञ्चसमा
साद्यकुरूद्वह॥ऋषयःकिलराजेन्द्रनैमिषेया
स्तपस्विनः॥तीर्थयात्रांपुरस्कृत्यकुरुक्षेत्रंगताः
पुरा॥ततःकुञ्जःसरस्वत्याःकृतोभारतसत्तम॥
ऋषीणामवकाशःस्याद्यथापुष्टिकरोमहान्॥त
स्मिन्कुंजेनरःस्नात्वा अग्निष्टोमफलंलभेदित्यादि
॥ ॥ इतिश्रीमन्महाराजाधिराजमहाराजश्री
रामवंशजश्रीमन्महाराजमाधवसिंहकारिते
तीर्थसुधानिधौनैमिषतरङ्गः॥ ॥ अथप्रसं
गात्केदारमाहात्म्यमुच्यते तत्रादौकेदारस्मर
णफलम्॥वायुपुराणे॥स्मरणादश्वमेधस्य
फलंतुलभतेपरम्॥स्पर्शनाद्ब्रह्मलोकादिलोका
भुंक्तेयदृच्छया॥१॥ममदेहात्समुत्पन्नंकेदारं
क्षेत्रमुत्तमम्॥तस्यस्मरणमात्रेणभद्रेरेवप्रपू
र्यते॥२॥पातकैश्चविमुच्येतआजन्मोपार्जितैर
पि॥यैर्जलंपीयतेसुभ्रुकुरुत्वंममतेजसम्॥३
तत्तीर्थजलपानफलम्॥वायुपुराणे॥उदकंयेस्तु
तत्रीतंनतेशोच्याहिमानवाः॥संसारसागरेघो
रे दुःपारेक्लेशसंकुले॥१॥त्रिनेत्राश्शूलहस्ताश्च

शशांककृतशेखराः॥व्याघ्रचर्मधराजातामम पुत्रामहाबलाः॥२॥केदारस्योदकंपीतंयैर्नरैःपु ण्यकर्मभिः॥भवतापविनिर्मुक्तामोक्षंगच्छन्ति मानवाः॥३॥गर्भवासोनतेष्वस्तिमुक्तास्तेपुरुषो त्तमाः॥वहुनात्रकिमुक्तेनसत्यंसत्यंवरानने॥अ थतत्क्षेत्रप्रदक्षिणफलम्॥वायुपुराणे॥तत्रये शुभकर्माणःकुर्वन्तिहिप्रदक्षिणम्॥प्रदक्षिणीकृ तातेनसप्तद्वीपावसुंधरा॥यत्फलंसर्वयज्ञेषुसर्व दानेषुयत्फलम्॥तत्फलंकोटिगुणितंममकृत्वा प्रदक्षिणम्॥२॥अथदशाक्षरीविद्यानुष्ठानपूर्व कंस्नानम्॥ वायुपुराणे॥दशाक्षरीमहाविद्याभु क्तिमुक्तिफलप्रदा॥यस्याःश्रवणमात्रेणमुच्य तेब्रह्महत्यया॥ ओंकारद्वयसंयुक्तंह्रकारत्रय भूषितम्॥ हूंकारपंचकयुतंदशविंदुपरिःकृत म्॥मंत्रवर्णस्यमालान्तेकथयामिसुरेश्वरि॥उ च्चारणेनैवयस्यानश्यतेपातकंमहत्॥ ॐरुंस्रुं रुंज्रूंहूंहंइति अङ्गन्यासादिवायुपुराणादवसेय म्॥अथभाद्रेअनुष्ठानविशेषोवायुपुराणे॥भा द्रेवाश्रावणेमासिकृष्णपक्षेचतुर्दशी॥उपकुण्डे ततःस्थित्वास्थिरदृष्टिरनाकुलः॥१॥कुण्डंनिरीक्ष येतावद्यावन्मध्यगतोरविः॥मध्यंगतेरवौदेवि शंखकुन्देन्दुभास्वरम्॥२॥बुद्बुदाकारसंभूतंचतु

रंगुलमुच्छ्तम्॥ तद्वेतोमामकंदेवि भुक्तिमुक्तिफलप्रदम्॥३॥ तस्मिवेद्भक्तिसंयुक्तोममैवहितचेतसा॥ दक्षिणेनैवहस्तेनत्रीनूवारांश्च सुरेश्वरि॥४॥ वामहस्तेनतानेवउभाभ्यांतु पिवेत्त्रयम्॥ध्यायन्देवंशिवंशान्तंभक्त्यादेविमहेश्वरम्॥५॥ईशानाभिमुखोभूत्वापिवेद्वामेनपाणिना॥ दक्षिणेनततःपीत्वापिवेत्तुवृषभोयथा॥६॥भूमिमागत्यजानुभ्यांहस्तयुग्मंप्रसार्य्यच॥ ईषन्मात्रंचवारांस्त्रींस्त्रिधास्फोटंतुकारयेत्॥७॥ अहंब्रह्मास्म्यहंविष्णुरहंरुद्रोमहेश्वरः॥ करस्फोटंततःकृत्वावदेद्वैसाधकोत्तमः॥८॥मत्तुल्योनास्तित्रैलोक्ये देवोवादानवोपिवा॥ गन्धर्वोराक्षसोवापिपिशाचोरगकिन्नरः॥९॥पुनःप्रभातसमयेतीर्थेस्नात्वाविधानतः॥ तर्पयेत्पितृदेवांश्चतथाभूतान्यशेषतः॥१०॥उपवासंततःकृत्वाक्षपेत्सप्तदिनानिच॥ कृत्वैवमुक्तनियमैःसर्वैरेवनसंशयः॥११॥ अन्यथाषट्सुमासेषुस्थातव्यंसर्वतोजनैः॥ब्रह्मचर्य्यंभूमिशय्यापरान्नंकुत्सितस्यच॥१२॥रजस्वलादिसंस्पृष्टंसर्वमन्नन्तुवर्जयेत्॥ अन्यथाद्भूतंकंभद्रेमृत्युकालंतुशोभने॥१३॥ह्रियतेगणपैर्वीरैस्तद्रक्षणपरैःप्रिये॥तस्मात्सर्वप्रयत्नेनषड्व्रतंतत्रकारयेत्॥१४॥भक्तियुक्तैर्नरैश्श्रद्धाभक्ति

युक्तेनचेतसा॥ अथवाषट्सुमासेषुस्थातव्य न्नियतैर्नरैः॥१५॥ यत्रतत्रस्थितोभद्रेसप्तवाराभि मंत्रितम्॥ अनयाविद्ययायस्तुयःपिवेद्दितरज्ज लम्॥१६॥ संवत्सरंहिसम्पूर्णंब्रह्मचर्य्येणयत्न तः॥ सतांगतिमवाप्नोतिकेदारंयातिमानवः॥ ॥ॐ॥ इतिश्रीमन्महाराजाधिराजमहाराजश्रीम द्रामवंशजश्रीमन्महाराजमाधवसिंहकारिते तीर्थसुधानिधौकेदारतीर्थनिरूपणन्नामकेदार तरङ्गः॥ॐ॥ अथगयातीर्थप्रसंसा॥ स्कान्दे॥ किं कुरुक्षेत्रदानेनप्रयाः गेवपनेनकिम्॥ काश्यां तुदेहपातेनयदिपुत्रोगयांव्रजेत्॥ तथा॥ ब्रह्म ज्ञानेगयाश्राद्धंगोग्रहेमरणंतथा॥ वासःपुंसांकु रुक्षेत्रेमुक्तिरेषाचतुर्विधा॥ तथा॥ ब्रह्मज्ञानेन किंसाध्यंगोग्रहेमरणेनकिम्॥ किंकुरुक्षेत्रदा नेनयदिपुत्रोगयांव्रजेत्॥ तथा॥ गयापिण्डप्र दानेनयत्फलंलभतेनरः॥ नतच्छक्यंमयावक्तुं कल्पकोटिशतैरपि॥ बृहस्पतिः॥ कांक्षंतिपि तरःपुत्रान्नरकाद्भयभीरवः॥ गयांयास्यति यः कश्चित्सोस्मान्सन्तारयिष्यति॥ गयायांधर्मपृ ष्ठेचसदसिब्रह्मणस्तथा॥ गयाशीर्षाक्षयवटेपि तॄणांदत्तमक्षयम्॥ ब्रह्मारण्यंधर्मप्रिष्ठंधेनुका रण्यमेवच॥ दृष्ट्वैतानिपितॄणांचवंश्यान्विंश

तिमुद्धरेत्॥ महाभारते॥ आङ्गिरसतीर्थयात्रायाम्॥ मुण्डपृष्ठे गयायांच नैरिते देवपर्वते॥ त्रेतायां क्रौञ्चपद्याञ्च ब्रह्महत्याविमुच्यते॥ तथा॥ पुलस्त्यतीर्थयात्रायाम्॥ ततो गयां समासाद्य ब्रह्मचारी जितेन्द्रियः॥ अश्वमेधमवाप्नोति गमनादेव भारत॥ तत्राक्षयवटो नाम त्रिषु लोकेषु विश्रुतः॥ यत्र दत्तं पितृभ्यस्तु भवत्यक्षयमित्युत॥ महानद्यामुपस्पृश्य तर्पयेत्पितृदेवता॥ अक्षयान्प्राप्नुयाल्लोकान्कुलं चैव समुद्धरेत्॥ तथा॥ धौम्यतीर्थयात्रायाम्॥ एष्टव्या बहवः पुत्रा यद्येकोपि गयां व्रजेत्॥ स तारयति माहात्म्याद्दश पूर्वान्दशापरान्॥ महानदी च तत्रैव तथा गयशिरो नृप॥ यत्रास्तु कीर्त्तितः विप्रैरक्षय्यकरणो वटः॥ यत्र दत्तं पितृभ्योन्नमक्षय्यम्भवति प्रभो॥ सा च पुण्यजला यत्र फल्गुनामा महानदीत्यादि॥ अथ गदाधरमहिमा॥ अग्निपुराणे॥ स्थितो गदाधरो देवो व्यक्ताव्यक्तोभयात्मकः॥ निश्चलार्थं स्वयं देवः स्थित आदिगदाधरः॥ आदिगदाधरनामनिरुक्तिः॥ वायवीये॥ आद्यया गदया भीतो यस्माद्दैत्यस्थिरीकृतः॥ स्थित इत्येष हरिणा तस्मात्तादिगदाधरः॥ तथा॥ गदया प्रागवष्टभ्य गयासुरशरीरकम्॥ निश्चलार्थं स्थितो यस्मात्तस्मादा

दिगदाधरः॥ तथा॥शिलापर्वतफलवादिरूपे
णाव्यक्तआस्थितः॥गदाधरादिरूपेणव्यक्तआ
दिगदाधरः॥शिलापादादिरूपेणव्यक्ताव्यक्ता
त्मनास्थितः॥तथापिद्रक्ष्यन्तिसदाभक्त्यादेवग
दाधरम्॥ तेप्राप्स्यंतिधनंधान्य मायुरारोग्यमे
वच॥कलत्रपुत्रपौत्रादिगणकीर्त्तिसुखादिकमि
त्यादि॥अथपदमहिमावायवीये॥विष्णोःपदंरु
द्रपदं ब्रह्मणःपदमुत्तमम्॥कश्यपस्यपदंदिव्यं
द्वौहस्तौयत्रनिर्गतौ॥पञ्चाग्नीनांपदंतत्र इन्द्रा
गस्त्यपदेपरे॥ रेवेश्च कार्त्तिकेयस्यक्रौञ्च मा
तङ्गयोरपि मुखलिंगानिसर्वाणिपदानीतिनि
बोधतेति॥अथरुद्रपदमहिमा।त्रिस्थलीसेतौ
महाभारते॥रामोरुद्रपदेश्राद्धेपिण्डदानायचो
द्यतः॥पितादशरथःस्वर्गात्प्रसार्यकरमागतः
॥नादात्पिण्डंकरेरामोददौरुद्रकरेततः॥रामोरु
द्रपदेश्राद्धेपिण्डदानायचोद्यतः॥शास्त्रार्थाति
क्रमाद्भीतोरामंदशरथोऽब्रवीत्॥ तारितोहंत्व
यापुत्ररुद्रलोकोह्यभून्मम॥पदपिण्डप्रदानेन
हस्तेतुस्वर्गतिर्नहि॥त्वंचराज्यंचिरंकृत्वापाल
यित्वाद्विजान्प्रजाः॥यज्ञान्सदक्षिणान्कृत्वावि
ष्णुलोकंगमिष्यसि॥सहायोध्याजनैःसर्वैःकृमि
कीटादिभिसह॥इत्युक्त्वासोदशरथोरुद्रलोकं

यथोपरमिति॥ अथगयादिनामनिर्वचनंवाय-
वीये॥ श्वेतकल्पेतुवाराहेगयोयागमकारय
त॥ गयानाम्नागयाख्याताक्षेत्रंब्रह्मादिकांक्षि
तम्॥ आग्नेयेऽपि गयोपिचाकरोद्यागंवह्वन्नं
बहुदक्षिणम्॥ गयापुरीनाम्नेतिवायवीये॥
दैत्यस्यमुण्डपृष्ठेतुशिलायस्माच्चसंस्थिता॥
तस्मात्समुण्डपृष्ठादिःपितृणांब्रह्मलोकदः॥ त
थाक्रौंचरूपेणहिमुनिर्मुण्डपृष्ठेतपोकरोत्॥ त
स्यपादांकितायस्मात्क्रौंचपादस्ततःस्मृतः॥ त
था॥ दैत्यसुरस्ययच्छीर्षंगदयातुद्विधाकृतम्॥
ततःप्रक्षालितायस्मिंस्तीर्थेतस्यविमुक्तये॥
गदालोलमितिख्यातंसर्वेषांमुक्तमोत्तमम्॥ अ
थगयादिप्रमाणम्॥ वायवीये॥ पंचक्रोशंगया
क्षेत्रंक्रोशमेकंगयाशिरः॥ अत्रापिमध्यमाव-
धिस्तत्रैवमुण्डपृष्ठाच्चपूर्वस्मिन्दक्षिणेपश्चिमो
त्तरे॥ सार्द्धक्रोशद्वयंमानंगयेतिपरिकीर्त्तितम्॥
मुण्डपृष्ठादिमध्यावधिरित्यर्थः॥ अग्निपुराणे॥
गयाशिरःपरिमाणम्॥ नागकूटाद्गृध्रकूटाकूटा
दुत्तरमानसात्॥ एतद्गयाशिरःप्रोक्तंफल्गुतीर्थं
तदुच्यते॥ तावदेवफल्गुतीर्थमित्यर्थः॥ तथा॥
मुण्डपृष्ठनगाधस्तात्फल्गुतीर्थमनुत्तमम्॥ अ
त्रानुत्तममितिनिर्देशाद्गयाशिरःपरम्॥ तस्यापि

फल्गुतीर्थस्यमुण्डपृष्ठाधस्ततोभागोतिपवि
त्रइत्यर्थः॥भारते॥महानदीदेवनद्योस्तद्यत्ती
र्थोद्यदन्तरम्॥उदक्पालकनन्दायागयामध्यं
प्रकीर्त्तितम्॥तथा॥महानद्यापश्चिमेनयाव
द्गृध्रेश्वरोगिरिः॥उत्तरेब्रह्मकूपस्ययावद्दक्षि
णमानसम्॥एतद्गयाशिरोनामत्रिषुलोकेषु
विश्रुतमिति॥अथगयागमनप्रशंसावाद्य
ग्निपुराणयोः॥गृहाच्चलितमात्रेणगयायाग
मनंप्रति॥स्वर्गारोहणसोपानंपितृणांचपदेप
दे॥पदेपदेऽश्वमेधस्ययत्फलंगच्छतोगया
म्॥तत्फलंचभवेन्नृणांसमग्रंनात्रसंशयः॥
स्मृतिरत्नावल्यां विप्रघ्नस्यसुरापस्यबालघ्न
स्यगुरुद्रुहः॥नाशमायातिवैपापंगयांसमनु
पातियः॥तथा॥ततोगयांसमाश्रित्यब्रह्मचा
रीजितेन्द्रियः॥अश्वमेधमवाप्नोतिगमनादे
वभारत॥अथगयावासकालनियमः॥तत्रवा
द्यग्निपुराणयोर्गयांप्रक्रम्य॥पक्षत्रयनिवासी
चपुनात्यासप्तमंकुलमिति॥अनेनसार्द्धमासं
वासःफलति॥अथगयाश्राद्धाधिकारिणः॥
स्मृतिरत्नावल्याम्॥आत्मजोवान्यजोवापिग
याकूपेयदातदा॥यन्नाम्नापातयेत्पिण्डंतन्न
येद्ब्रह्मशाश्वतम्॥तथा॥सवर्णाज्ञातयोमित्र

बांधवाः सुहृदस्तथा ॥ तेपि भूयो गयाकूपे पिण्डं दद्युर्विधानतइति ॥ अत्र गयायां कश्चिच्छ्राद्धे विशेषः ॥ हेमाद्रौ ॥ महालये गयाश्राद्धे प्रेत श्राद्धे दशाहिके ॥ पिण्डशब्दप्रयोगः स्यादन्नमन्यत्र कीर्त्तयेत् ॥ तथा ॥ वृद्धिश्राद्धे गयाश्राद्धे प्रीतिश्राद्धे तथैव च ॥ सपिण्डीकरणश्राद्धे न पठेत्पितृसूक्तकमिति ॥ अथ गयाश्राद्धकालः ॥ वायवीये ॥ गयायां सर्वकालेषु पिंडं दद्याद्विचक्षणः ॥ अधिमासे जन्मदिने अस्ते च गुरुशुक्रयोः ॥ न त्यक्तव्यं गयाश्राद्धं सिंहस्थे च बृहस्पतौ ॥ अग्निपुराणे ॥ गयाश्राद्धं प्रकुर्वीत संक्रांत्यादौ विशेषतः ॥ काले वा परपक्षे वा चतुर्थ्यादितिथिष्वपि ॥ स्मृतिरत्नावल्याम् ॥ मकरे वर्त्तमाने तु ग्रहणे चन्द्रसूर्ययोः ॥ दुर्लभं त्रिषु लोकेषु गयायां पिण्डपातनम् ॥ गारुडे ॥ तीर्थश्राद्धं गयाश्राद्धं श्राद्धमन्यच्च पैतृकम् ॥ अब्दमध्ये न कुर्वीत महागुरुविपत्तिषु ॥ अयं निषेधः सपिंडीकरणाभावे ज्ञेयः तदुक्तम् ॥ अस्थिक्षेपं गयाश्राद्धं तथैव परपक्षिकम् ॥ अब्दमध्ये न कुर्वीत सपिंडीकरणं विनेत्यादि ॥ अथ गयायां पितरः ॥ हेमाद्रौ बौधायनः ॥ उपाध्याय गुरुश्वशूपितृव्याचार्यमातुलाः ॥ श्वसुरभ्रातृतत्सुत्रयाज्य

त्विकृप्रियपोषकाः॥भगिनीस्वामिदुहितृयामा
तृभगिनीसुताः॥पितरःपितृपत्नीनांपितुर्मातु
श्चयाम्चसा॥सखिद्रव्यदशिष्यांश्चतीर्थेचैव
महालये॥एकोद्दिष्टविधानेनपूजनीयाःप्रय
त्नतः॥पितृपत्नीनांपितरःसपत्नमातामहाः
इत्यादि॥अथतत्रत्यब्राह्मणप्रसंसा॥वायुपुरा
णे॥ब्रह्मप्रकल्पितान्विप्रान्हव्यकव्यादिना
र्चयेत्॥तैस्तुष्टैस्तोषिताःसर्वाःपितृभिःसहदे
वताः॥आग्नेये॥ब्रह्मा॥येयुष्मानपूजयिष्यन्ति
गयायामागतानराः॥हव्यैकव्यैर्धनैश्राद्धैस्ते
षांकुलशतंव्रजेत्॥नरकात्स्वर्गलोकात्तुपरां
गतिमितिध्रुवमित्यादि॥अथतत्रत्यनानातीर्थ
प्रसंसा वायुपुराणे॥उपोषितोथगायत्रीतीर्थे
फल्गुनदीस्थिते॥गायत्र्याःपुरतःस्नात्वाप्रातः
संध्यांसमाचरेत्॥श्राद्धंसपिण्डकंकृत्वानये
द्ब्राह्मणतांकुलम्॥तीर्थेसमुद्यतेस्नात्वासावि
त्र्यापुरतोनरः॥संध्यामुपास्यमध्यान्हेनयेत्कु
लशतंदिवमित्यादि॥नानातीर्थानिप्रसिद्धान्ये
वेतिशिवम्॥ ॥इतिश्रीमन्महाराजाधिरा
जमहाराजरामवंशजश्रीमाधवसिंहवर्म्मका
रितेतीर्थसुधानिधौगयातरङ्गः॥ ॥ ॥छ॥
अथवैद्यनाथमाहात्म्यम्॥रावणस्तुत्यनन्तरं

शिववाक्यम्॥पाद्मे॥एतस्यमदभिन्नस्यलिं
गस्यतुसमर्च्चनम्॥यःकरिष्यतिपूतात्मातस्य
कामःकरेस्थितः॥शिवसंतिष्ठसंतिष्ठक्षेत्रेस्मि
न्सर्वकालके॥साधूनामुपकारायविनाशाय
चरक्षसाम्॥इत्युक्त्वाविष्णुनायातःयावत्क्ष
णशिवलिङ्गकम्॥सप्तपातालमाक्रम्यस्थि
तमष्टाङ्गुलंक्षितौ॥यद्दर्शनंत्रिलोकानांसक
लार्थप्रदायकम्॥स्पर्शनादेवसर्वेषांकेवल्य
स्यप्रदायकम्॥विष्णुना स्थापितंलिंगंपूजये
द्योविधानतः॥सोचिरेणैवकालेनलब्धकामो
भविष्यति॥अद्यारभ्यतुयःकश्चित्हरिद्वार
स्यचोदकम्॥आनीयभक्तिभावेनस्नापयिष्य
तिमामिह॥सोपिचित्तस्यकामेनभृशंपूर्णोभ
विष्यति॥वैद्यनाथंगमिष्यामिपूजयिष्यामितं
पुनः॥इतिसंभवतेयोवैसोपिपापात्प्रमुच्यते॥
अत्रागत्यतुयैश्चाहंपूजनीयश्चरावण॥तेषां
पापानिनश्यन्तिबहुजन्मकृतान्यपि॥मदर्च
नात्क्षयंयातिपापराशिरपिद्रुतम्॥अतोराव
णधन्यस्त्वंवर्त्तसेधरणीतले॥अतःपरतरंस्था
नंनास्तिवैजगतीतले॥अस्मिन्क्षेत्रेमृतायेतु
शूलपाणेरनुग्रहात्॥पुनर्नयांतिसंसारंपापपू
र्णोनरायदि॥मानुषंदुर्लभंप्राप्यवैद्यनाथस्यद

र्शनम्॥ नकरोतुनरोयस्तुतस्यजन्मनिरर्थक
म्॥ अन्यत्रकृतपापानांविलयंतीर्थदर्शनात्॥
तीर्थेषुकृतपापानांविलयंकाशिदर्शनात्॥
काश्यांविहितपापानांवैद्यनाथस्यदर्शनात्॥
विलोपोजायतेक्षिप्रमतःक्षिप्रंसुदर्शनं॥ वैद्य
नाथस्यपापानांवज्रलेपोभविष्यति॥ तस्मात्
काशीस्थितैःपापमुक्तयेप्रतिवत्सरम्॥ वैद्यना
थस्ययात्रावैसर्वपापापहारिकेति॥ ॥ ॥
श्रीमन्महाराजाधिराजमहाराजश्रीरामवंशज
श्रीमन्महाराजमाधवसिंहकारितेतीर्थसुधा
निधौवैद्यनाथतरङ्गः॥ ॥ अथचित्रकूटमा
हात्म्यम्॥ बृहद्रामायणे॥ स्नात्वाश्रीयज्ञवेद्या
न्तुदृष्ट्वासीतापतिंनरः॥ प्रदक्षिणंगिरेःकृत्वाको
टियज्ञफलंलभेत्॥ पयोभूतानदीयत्ररामरूपा
नसंशयः॥ यावत्स्थास्यंतिगिरियोयावत्स्थास्यं
तिसागराः॥ तेगतिंपरमांयांतिदुःप्राप्यामजि
तेंद्रियैः॥ तपसातेजसाच्चैवदुर्निरीक्ष्यासुरैरपि
॥ तेभवंतिनरानित्यंमन्दाकिन्याःप्रभावतः॥
चित्रकूटगिरिंदृष्ट्वापुनर्जन्मनविद्यते॥ चित्रकूटं
गिरिंदृष्ट्वासर्वतीर्थफलंलभेत्॥ तत्रमंदाकिनी
नामपापिनांपापनाशिनी॥ नीलकंठंशिवंदृष्ट्वा
पुनर्जन्मनविद्यते॥ ॥ इतिश्रीमन्महाराजा

धिराजमहाराजश्रीरामवंशजश्रीमन्महाराज
माधवसिंहकारितेतीर्थसुधानिधौवैद्यनाथत
रङ्गः॥ ॥ अथजगदीशमाहात्म्यमुच्यते॥त
त्रादौतत्तीर्थस्यदेवदर्शनादपिपरपदमितित
त्प्रतिपादिकाश्रुतिः॥ ऋग्वेदसंहितायाम्॥अ
दोयद्दारुप्लवतेसिन्धोःपारेअपूरुषंतदारभस्व
दुर्हणास्तेनगच्छपरस्तरम्॥ तथा॥ज्येष्ठेभ
गवतोस्नानस्यावलोकनम्॥ सर्वसन्तापशम
नमशेषफलसाधनम्॥ स्नपनंश्रीपतेर्ज्येष्ठ्यां
यदिभक्त्यावलोक्यते॥१॥प्रायश्चित्तनिमित्ता
नियानिपापानिसन्तिवै॥ तानिपापानिलीयंते
पश्यतास्नपनंहरेः॥२॥ नातःश्रेयस्करंकर्मशा
स्त्रदृष्टेपथिस्थितम्॥ मञ्चस्थंस्नाप्यमानंहि
यःपश्येत्पुरुषोत्तमम्॥३॥ स्नानाच्छतगुणंपु
ण्यंलभतेवैनसंशयः॥ मञ्चस्थितंजगन्नाथं
स्नानेयस्तुप्रपश्यति॥४॥ सानन्दार्द्रचित्तोसौ
नकिंचित्तापमश्नुते॥ तदेवपुण्यमुदितंस्नान
दर्शनकर्मणि॥५॥ अवशेषतोयस्नानफलम्॥
स्नानावशेषतोयेनस्नायात्रुद्रासनस्थितः॥
नारीवापुरुषोवापितस्यपुण्यंवदाम्यहम्॥६॥
अपुत्रामृतवत्सावावन्ध्यावापिलभेत्सुतम्॥
सुभगःसर्वलोकानांनिर्धनोधनवान्भवेत्॥अ

थजेष्ठेस्नानेविशेषोयेमिनीये॥जेष्ठस्यविमले पक्षेपाचवेपञ्चमीभवेत्॥सक्रुर्च्छेकांसगेच न्द्रेदिनेचगुरुवासरे॥शुभेयोगे महाजेष्ठीसर्व पापप्रणासिनी॥आषाढसितपक्षस्यद्वितीया पुष्यसंयुता॥अरुणोदयवेलायांतस्यांदेवंप्र पूजयेत॥९॥वैष्णवैःब्राह्मणैःसार्द्धंजातिभि श्चतपस्विनि॥विज्ञापयेद्दे वदेवंयात्रार्थेसक्रु ताञ्जलिः॥१०॥इन्द्रद्युम्नंक्षितिभृतांयथात्ता सीःपुराविभोः॥विजयस्वरथेनाथगंडिवामं डपंप्रति॥तवापिगविलोकेनप्रयुनंतुदिशो दशाः॥११॥निःश्रेयसपदंयातुस्थावराणिचरा णिच॥अथअवतारकथास्कान्दे॥इन्द्रद्युम्न वाक्यम्॥कलिकल्मषसंमूढानुद्धर्त्तुजगतां पते॥अवतारोयमेतस्मिन्नीलाचलगृहान्तरे॥ १२॥काचित्कालप्ररूढानांदुस्त्यजांमहदम्भः सान्॥दृदंतेदर्शनंनाथविनाकर्मापिमोचयेत्॥ १३॥बहुजन्मसहस्रेषुमुक्त्यर्थंयततेतुयः॥ना ल्पभाग्यस्यपुंसोवैशरणंतत्रजायते॥१४॥अ थतत्रशरीरपातफलम्॥अन्तिमोविग्रहोह्ये षयश्चक्षेत्रेत्यजेत्तनुम्॥मुक्तिमुद्दिश्ययत्कर्म नतत्कर्मसमीरितम्॥१५॥श्रवणादियथाक र्ममुक्तयेमूलसाधनम्॥तथाचमरणंपुंसःसा

स्यात्कैवल्यसाधनम्॥ यथासर्वत्रसंरूढपा
षाणान्तरमाश्रयम्॥ कटित्याकृष्यतेलोहे
मयस्कांतमणिस्तथा॥ अत्रप्राणपरित्यागःस
र्वकर्माणिदेहिनाम्॥ महामाघ्यांविशेषः॥स्का
न्दे॥ महामाघ्यांमहाक्षेत्रेमहापुरुषदक्षिणे
॥ महार्णवेनृणांस्नानंमहापातकनाशनम्॥
यमखंडकुलेकश्चित्तंप्रतित स्वितरऊचुः॥पु
रुषोत्तममाहात्म्ये स्कान्दे॥ तथाहि॥गयायां
पिंडदानेनवयमत्यन्तदुःखिताः॥ महामोहा
वसानेचविमुखाकर्मणीदृशा इति॥ तदुत्तरंके
थाप्रस्तारे॥पुरुषोत्तमक्षेत्रे॥ महामाघ्यांधार्मि
कसत्तमदत्तपिण्डेन॥शुभ्ररूपाःशुभ्रकर्माणः
तत्क्षणादेवदिव्यंविमानमारुह्यदिवंगता इति
॥सर्वेषांकर्म णांपापंविदन्तःतत्वदर्शिनः॥अहो
मेजन्मनोभाग्यंपाखण्डकुलसंतते॥१॥ गयाश्रा
द्धेर्बहुकृतैःकृष्णवर्णापियोजितः॥विशुद्धमत
यस्तेमेराजानश्चसुरद्विषः॥२॥दिव्यदेहोहम
प्यासमन्येतेमोचितामया॥ यतश्चाहंदिव्यदे
हः अतःपिंडदानेनतेपिमोचि ताइति॥३॥
गङ्गासागरयोर्मध्ये॥ अथसर्वतीर्थापेक्षया
पुरुषोत्तमेसागरेदानस्नानयोर्विशेषः॥ गङ्गा
सागरयोर्मध्येगंगायमुनसंगमे॥ देवनद्यांगया

यान्त्वप्रभासेपुष्करेतथा॥ वाराणस्यांश्चयत्पु
ण्यमुक्तिक्षेत्रेतथैवच॥ दानमर्द्धोदयेदत्वातत्पु
ण्यंलभतेनरः॥ अर्द्धोदयेनरस्नात्वासर्वतीर्थ
फलंलभेत्॥ पुण्यतीर्थजलेस्नात्वानरोमोक्ष
पदंव्रजेत्॥ ॥ इतिश्रीमन्महाराजाधिरा
जमहाराजश्रीरामवंशजश्रीमन्महाराजमा
धवसिंहकारितेतीर्थसुधानिधौजगदीशतर
ङ्गः॥ ॥ अथविन्ध्यक्षेत्रमहिमा॥ प्रकाश
रूपायानित्यंविन्ध्याचलनिवासिनी॥ स्थिता
यासर्वभूतेषुव्याप्तायासकलार्थदा॥ १॥ यत्र
संवासिनांकामाः शीघ्रंसिध्यंतिसर्वदा॥ यत्र
स्थित्वामहामायाभुक्तिंमुक्तिंददातिसा॥ २॥
तस्यास्तुनाम्नातत्क्षेत्रंपावनंभुविमडले॥ वि
ख्यातंमंगलंदिव्यंकलिदोषविवर्जितम्॥
३॥ तत्क्षेत्रात्पूर्वभागेप्रचुरत्तरभगः शंकरः
शर्मदातायत्क्षेत्रेवासिनांयोबहुलतरसुसंतो
षदातापरेशः॥ भुक्तिंमुक्तिंचरम्यांवितरति
बहुलंपावनेस्वीयक्षेत्रेश्रीरम्येसनिविष्टः सु
भगणसहितस्तारकेशोमहेशः॥ ४॥ अथता
रककुण्डप्रसंसा विन्ध्यपुराणे॥ तस्याग्रेतार
केकुण्डंनाम्नातस्यमहेशितुः॥ यत्कुण्डंभुवि
विख्यातंपावनंमंगलप्रदम्॥ कुण्डेऽस्मिन्स्ना

नमात्रेणसर्वेस्नाताभवन्तिहि ॥ कुण्डस्यास्य
स्नपनजंमाहात्म्यंपरमंमहत् । अस्मिन्तीर्थेम
हापुण्येस्नानंकुर्वन्तिमानवाः ॥ पिण्डांश्चनि
र्वपिष्यन्तिसन्ध्यातर्पणपूर्वकम् ॥ देवास्तेश्चा
चतांप्राप्तास्तेषांपितृपितामहाः ॥ तेपिसाच
त्वमुत्सृज्ययास्यन्तिपरमांगतिमिति ॥ अथ
तत्समीपस्थलिङ्गानिविमलमाहात्म्ये ॥ तत्रभृ
ङ्गीश्वरस्साक्षान्महापातकनाशनः ॥ जीवन्मु
क्तोभवद्भृङ्गीयस्यलिंगस्यसेवनात् ॥ चतुर्वेदे
श्वरश्चैवचतुर्वेदधरोविधिः ॥ लभेद्यद्दर्शनाद्धि
प्रावेदाध्ययनजंफलम् ॥ यज्ञैःसंस्थापितंचैत
त्लिङ्गंसाष्टाङ्गुलन्तथा ॥ अष्टादशानांलिङ्गा
नांस्यादाधारोयदीक्षणात् ॥ अथसारस्वतलि
ङ्गम् ॥ सारस्वतंमहालिङ्गंसर्वजाड्यविनाश
कृत् ॥ सर्वतीर्थेश्वरेलिङ्गमेतत्सद्योविमुक्ति
दम् ॥ धर्मशास्त्रेश्वरश्चैवस्मृतिभिश्चप्रतिष्ठि
तः ॥ स्मृत्यध्ययनजंपुण्यंयद्विलोकनतोभवे
त् ॥ शैलेश्वरश्चतत्रैवस्वगणैश्चसमावृतः ॥ स
र्वेषांरत्नजातानांयोविभर्त्तिपरांश्रियम् ॥ क्षीर
सागरसंज्ञंवैलिंगमेतन्मनोहरम् ॥ यद्दर्शनाल्ल
भेन्मर्त्यःक्षीराब्धिस्नानजंफलम् ॥ तत्रमाहेश्व
रश्श्रीमानमन्त्रंप्राप्यफलप्रदः ॥ सप्तकोटिम

हामन्त्रैस्स्थापितोयःपुरायुगे।।त्रिपुरेशोमहा
लिंगंकुण्डंतत्रमहत्तरम्।।त्रिपुरेणैवस्वनितं
त्रिपुरारिप्रियंपरम्।। यत्रबाणेश्वरंलिंगंसहस्र
भुजपूजितम्।।द्विभुजस्यापिबाणस्यसहस्रभु
जहेतुकम्।।वैरोचनेश्वरश्चैवप्रल्हादेशस्त
थैवच।।भीष्मेश्वरश्चतत्रैवभीष्मकुण्डंमहत्त
रम्।।लिंगान्येतानियःपश्येत्सयातिपरमां
गतिम्।।नरोननरकंपश्येत्भुक्तिंमुक्तिंचगच्छ
ति।।यदर्चनाल्लभेज्जन्तुःप्रियत्वंसर्वजन्तुषि-
त्यादिप्रसिद्धानिप्रतिष्ठिततमानिलिंगानि।।
अन्यानिविन्ध्येसहस्रशोलिंगानिरत्नेश्वरम
धिकृत्यबोधव्यानि।।तथाहिविन्ध्यमाहात्म्ये
।।यानिकानिचलिंगानिविन्ध्येसन्तिसहस्रशः
।।रत्नभूतमिदन्तेषुलिङ्गंरत्नेश्वराभिधम्।।अ
थतारककुण्डसम्भूदितमहिमा।।रमांप्रतिशं
भुवरदानवाक्यम्।।येऽस्मिन्कुण्डेमहापुण्येस्ना
स्यन्तिभक्तितोनरा।।स्तेषान्नपुनरावृत्तिर्भवे
त्सत्यंब्रवीमिते।।श्राद्धंदानंजपंहोमंसंध्यास्वा
ध्यायमेवच।।यद्यदत्रकरिष्यन्तिभूयात्तदन
तंरमे।।कुण्डस्यास्यस्नपनजंपुण्यंवक्तुंतुकः
क्षमइत्यादि।।एवंब्रह्मलक्ष्मीकुण्डादीनिबहु
शस्सन्तितत्रतोवगन्तव्यानि।।अथपुण्यजला

माहात्म्यम्।।यज्जलस्पर्शमात्रेणनरोमुच्येत-
पातकात्।।माहात्म्यन्तस्यचाख्यातमतुलंत
त्वदर्शिभिः।।पुण्योघायागंगासंगमेफलम्।।पु
ण्योघायास्तुगंगायासंगमोलोकविश्रुतः।।तत्र
कुर्वन्तियेस्नानंतेयान्तिपरमांगतिम्।।भाद्रमा
सिसितेपक्षेद्वादशीवामनप्रिया।।तस्यांयःसं
गमेस्नातिपुण्योघायास्तुपावने।।माहात्म्यम
तुलंतस्यकल्पकोटिशतैरपि।।नसमर्थोभवेद्व
क्तुंनागाधीशोप्यशेषतः।।नद्यास्वविधायास्तु
संगमोगंगयायतः।।नातस्ततोधिकंपुण्यंवर्त्त-
तेसुरसत्तम।।अथतत्रयंत्रमहिमा।।बिन्दुस्त्रि
कोणंषट्कोणंवृत्तमष्टदलंतथा।।षोडसारंत-
तःपश्चाच्चतुर्विंशद्दलंततः।।भूपुरद्वारसहि
तंमहायन्त्रंप्रकीर्त्तितम्।।विन्दौतुसंस्थितादे
वीब्रह्मरूपेणसर्वदा।।पूर्वकोणेत्रिकोणेऽस्य
महालक्ष्मीव्यवस्थिताप्रत्यग्दिशिमुखंकृत्वा
भक्तानांभयहारिणी।।नानाम्बरधरादेवीना
नाभूषणभूषिता।।तत्कोणेसंस्थितांलक्ष्मीमि
त्यंसर्वेस्तुवन्तिच।।अथाष्टभुजा।।प्रत्यक्कोणे
मुखंकृत्वाउत्तरस्यांदिशि स्थिता।।सामायाष्ट
भुजाशक्तिरीश्वरीसर्वमोहिनी।।साधयत्यखि-
लान्कामान्स्वैर्भजैरष्टसंज्ञकैः।।दिग्भिरष्टाभिरव

तीभक्तान्बाहुभिरष्टभिः॥ अथमहाकाली॥ यं
त्रस्यदक्षिणेकोणेमुखमूर्द्ध्वंविधायसा॥ मह
कालीमहारूपासंस्थितापरमेश्वरी॥ तांस्तुव
न्तिमहासिद्धायोगीशानिर्मलात्मना॥ सर्वैस्त
विष्टपैस्सार्द्धशाम्भवींकालिकांशिवाम्॥ पूर्वे
कोणेरतिर्देविसंस्थितापरमेश्वरी॥ याम्यको
णेमहाकाल्याःनिकटेप्रीतिनामिका॥ संस्थि
तासामहाशक्तिःकोणेतुपश्चिमेतथा॥ विज
यानामिकाशक्तिःस्थितावाण्याःसमीपके॥ त
दग्रेकोणषट्केतुशक्तयःसंस्थितास्त्विमाः॥ ज्ञा
तव्यासंक्रमेणैवसर्वाघौघनिवारिकाः॥ डाकि
नीशाकिनीचैवलाकिनीकाकिनीतथा॥ शाकि
नीहाकिनीचैवशक्तयष्षडुदाहृताः॥ वृत्ताष्ट
दलेब्राह्मीत्याद्यास्तालोकमातरः॥ संस्थिता
तत्रवसतांहितायजगतांतथाचेत्यादि॥ नाना
शक्तिगणेशभैरवादिभिस्समावृत्ताविन्ध्यनिवा
सिनीति॥ अथयात्रा॥ ततोगच्छेन्महाकालींको
णेयाम्येस्थितांशिवाम्॥ पूर्वोक्तक्रमेणैवपू
जयेद्भक्तिभावतः॥ पूजयित्वामहामंत्रंयथाश
क्त्याजपेत्सुधीः॥ अथरामगयाविन्ध्यमाहात्म्ये
॥ तत्क्षेत्रात्पश्चिमायान्तुगयारामस्यपुण्यदा॥
एकयोजनविस्तीर्णापितॄणांमोक्षदायिनी॥ क

गोवतीनदी तत्रसर्वकल्मषघातिनी॥ स्वर्न
द्यासहसंज्ञातः संगमः साधुपूजितः॥ तत्रैका
स्थापितारामचंद्रेणानल्पमेधसा॥ शिलाकलि
जदोषेण पीडितानां हितायच॥ तत्रकुर्वन्तियेश्रा
द्धंपितृणांतृप्तिहेतवे॥ नंदंतिपितरस्तेषांत्रि
दिवेत्वमरैःसहेति॥ स्थिताष्टमातृककलाष्ट
दलाग्रेऽष्टौभैरवाः॥ असितांगरुरुचण्डक्रोध
उन्मत्तकपालभीषणसंहाराः॥ तदग्रेषोडसारे
इमादेव्यः क्रमेणैवज्ञेयाः पाशिनीकामिनी
मोहिनीविमला॥ अरुणाजयिनीसर्वाईश्वरी
अनंगकुसुमाअनंगमेखलामदनाअनंगवे
गिनी॥ अनङ्गमदनाअनंगाअंकुशाअनंगमं
गलाक्षेत्रइति॥ तदुत्तरम्॥ यंत्ररक्षार्थेस्थिता
श्शक्तयस्त्विमाः॥ विष्णुमायाचेतनाचमहाब
लवतीबुद्धिनिद्राक्षुधाछायाशक्तितृष्णाक्षा
तिजातिलज्जाशान्तिश्रद्धाकांतिकालक्ष्मीवृ
त्तिधृतिस्मृतिदयातुष्टिपुष्टिमातृरूपाभ्रांति
बलादृन्द्रियाद्विष्ठात्रीचितिरूपा॥ एताश्शक्त
योविन्ध्यक्षेत्रेसदास्थिताः॥ ततस्तुचतुर्द्वारे
गणेशश्चकुमारश्चपुष्पदंतोपिकार्त्तनः॥ इति
चत्वारोगणेशाः॥ आनन्दभैरवःपूर्वेसिद्धिना
थस्तुपश्चिमे॥ कपालभैरवोदेव्यादक्षिणेचोत्त

रेरुरुः॥ द्विःपंचाशद्भैरवास्तत्र क्षेत्रे सिद्धिवि
धायिनः॥ योगिन्यस्संस्थितास्तत्र स्वस्वायुध
समावृताः॥ यंत्रराजस्य परितो रक्षार्थं तादृढ
व्रताद्इत्यादि॥ अथाष्टभुजाध्यानम्॥ श्वेता
ब्धौश्वेतपत्रे रविदलकमलाभ्यन्तरे सन्निष
ण्णां श्वेतांगीं श्वेतमौलिस्फुरितशशिकला
मष्टबाहूं नमामीत्यादि तीर्थानि तत्र सन्ति॥८
विन्ध्यक्षेत्रे च तीर्थानां॥ कोटीनां यात्रास्नान
दानजपहोमादिस्थानानीति शम्॥ भूतत्र्य
ङ्कःशशांकसम्मितमिते ऽब्देमासि पौषे ऽष्टमी
श्रीमन्माधवसिंहकारिततनुर्भूयात्स तां प्री
तये॥ नाम्ना तीर्थसुधानिधिश्शुभनिधिः प्रातुप्र
मामन्धके पक्षे ऽन्हि क्षितिनन्दने समभवत्पूर्णो
निबन्धश्शिवम्॥ ः॰ः॥ इतिश्रीमन्महारा८
जाधिराजमहाराजश्रीरामवंशजश्रीमन्म८
हाराजमाधवसिंहकारिते तीर्थसुधानिधौ
बिन्ध्याचलतरङ्गः॥ ः॰ः॥ शुभंभवतु॥

# अथोपक्रमणिकातत्रायोध्या सूचीपत्रम्

॥ अथमायातरङ्गानुक्रमणिका ॥

✻ अथद्वारावतीतरङ्गसूचीलिख्यते ✻

अथपुष्करतरङ्गसूचीप्रारभ्यते

## अथविन्ध्यतरङ्गःप्रारभ्यते ॥



### अथोपक्रमणिकासमाप्ता

| ९८ | ७ |
|---|---|